17-3

# संस्कृतवाक्यप्रबोधः

# Sanskritavakyaprabodhah

श्रीमत्स्वामिदयानन्दसरस्वतीनिर्मितः

uthored by Shrimat Swami Dayanand Saraswati

संस्कृतवाक्यानां हिन्दी-आङ्ग्लरूपान्तरणसहितः

Carrying Hindi and English version of Sanskrit Sentences

प्रधानसम्पादकः

डॉ० धर्मेन्द्रकुमारः

दिल्ली-संस्कृत-अकादमी

DELHI SANSKRIT ACADEMY

( राष्ट्रिय राजधानी क्षेत्रम्, दिल्ली सर्वकारः )

ओ३म्

॥ सच्चिदानन्देश्वराय नमो नमः ॥

# संस्कृतवाक्यप्रबोधः

# 'SANSKRITAVAKYAPRABODHAH'

श्रीमत्स्वामिदयानन्दसरस्वतीनिर्मितः

**Authored by Shrimat Swami Dayanand Saraswati**

संस्कृतवाक्यानां हिन्दी-आङ्ग्लरूपान्तरणसहितः

**Carrying Hindi and English version of Sanskrit Sentences**

प्रधानसम्पादकः

डॉ० धर्मेन्द्रकुमारः

सहसम्पादकः

प्रद्युम्नचन्द्रः

संस्कृतवाक्यानामाङ्ग्लरूपान्तरणकारः

English version by :

डॉ. खजानसिंहगुलिया

**Dr. Khazan Singh Gulia**

दिल्ली-संस्कृत-अकादमी

**DELHI SANSKRIT ACADEMY**

राजधानीक्षेत्रम्, दिल्लीसर्वकारः

२०१३-२०१४

प्रकाशकः-
सचिवः
दिल्ली-संस्कृत-अकादमी
(राष्ट्रिय-राजधानी-क्षेत्रम्, दिल्लीसर्वकारः)



ISBN : 978-81-925829-4-8

प्राप्तिस्थानम् -
प्रकाशन-विभागः
दिल्ली-संस्कृत-अकादमी
(राष्ट्रिय-राजधानी-क्षेत्रम्, दिल्लीसर्वकारः)
प्लाट सं०५, झण्डेवालानम्, करोलबागोपनगरम्, नव दिल्ली-११०००५
दूरभाष : २३५५५६७६, २३६८१८३५, २३६३५५९२

मूल्यम्- ५०/- रूप्यकाणि

मुद्रकः-
मै० डालफिनप्रिण्टोग्राफिक्सः
४ई/७, पाबला-बिल्डिंगः, झण्डेवालानविस्तारः,
नव देहली-११००५
दूरभाषः-०११-२३५९३५४१, २३५९३५४२

# सम्पादकीयम्

अयि सम्मान्याः सततसरस्वतीसमाराधनसंलग्नाः संस्कृतसेविनः सुकृतिनः! भवन्तः जानन्त्येव यत् दिल्ली-संस्कृत-अकादमी संस्कृत-वाङ्मयस्य ज्ञानविज्ञानविस्ताराय सम्प्रति कृतनिश्चया वर्तते। संस्कृत-भाषायाः सततं प्रचारः प्रसारः द्रुततया भवेदिति मे प्रयासः।

यद्यपि सन्ति बहूनि पुस्तकानि संस्कृतमध्येतुं शिक्षितुञ्च तथापि महर्षिणा दयानन्देन 'संस्कृतवाक्यप्रबोधः' इति नाम्नि पुस्तके विस्तरेण अतीव सरलया गिरा जिज्ञासुनां संस्कृताध्येतॄणां पिपठिषूणां कृते श्लाघनीयः प्रयासः विहितः इत्यत्र नास्ति कोऽपि संदेहावसरः।

महर्षिणा अनेकानि पुस्तकानि रचितानि तेष्वन्यतमानि सत्यार्थ-प्रकाशः-संस्कारविधिः-ऋग्वेदादिभाष्यभूमिका च प्रसिद्धानि एव। सत्यार्थ-प्रकाशस्य नाम्नैव ज्ञायते यत् सत्यस्य प्रकाशनं कर्तव्यम्। सत्यार्थः प्रकाशनीयः। सत्यासत्यविवेचनमिदं धर्मानुरूपमेव विधेयम्। अत एव उक्तम्—"सर्वं कार्यजातं धर्मानुरूपमर्थात् सत्यासत्यविवेचनपुरस्सरमेव विधेयम्। धर्मशब्देनात्र स्वस्वकर्तव्यपरिपालनमेव अपेक्षितं भवति। एतत् सर्वं महर्षिणा संस्कारविधौ विस्तरेण विवेचितमस्ति। ऋग्वेदादिभाष्य-भूमिकाया अधिकारप्रसंगे वेदपठनपाठनविषये तेनेदं स्पष्टमुद्घोषितं वेदादि-शास्त्रपठने सर्वेषामधिकारोऽस्ति। कुतः? वेदानामीश्वरोक्तत्वात्, सर्वमनुष्योपकारकत्वात् सत्यविद्याप्रकाशकत्वाच्च। तेनैव उद्घोषितं सर्वादौ—'वेदो हि सर्वासामेव सत्यविद्यानां पुस्तकं, तस्य पठनं पाठनं, श्रवणं श्रावणञ्च परमो धर्मः' इति।

स्वस्थसमाजस्य निर्माणं सुशिक्षया एव भवति। शिक्षां विना मानवः दानव एव। अत एव महर्षिणा प्रतिपादितम्—

**अविद्याविनाशो विद्याभिवृद्धिश्च विधेया।**

सर्वस्मिन् देशे एको धर्मः, एका मानवजातिः, एकाभाषा, स्वदेशीय-वस्तुप्रचारः, दलितोद्धारः राष्ट्रोद्धारः, अस्पृश्यताया अभावः, जातिवाद-विरोधः अयं ज्येष्ठः, अयं श्रेष्ठः, अयं मध्यमः अयं कनिष्ठ इति विरुद्ध-समानतावादः, राष्ट्रियं धार्मिकं सांस्कृतिकं सामाजिकञ्च एकत्वम्, उत्कटः स्वदेशाभिमानः, स्वराज्यघोषणादिकं सर्वमेतद् अभूतपूर्वं कार्यजातं महर्षिदयानन्दः स्वराष्ट्राय प्रायच्छत्। नारीजातिं स पूजनीयां मन्यते। स्त्रीशिक्षां विना कोऽपि समाजः नैव स्वोन्नतिं कर्त्तुं शक्नोतीति तस्य दृढो विश्वासः। दयानन्दो हि पददलितभारतराष्ट्रस्य पुनरुत्थानमकरोत्।

स हि वस्तुतः सामाजिकीं क्रान्तिं व्यदधात् अन्धश्रद्धाञ्च दूरीकृत्य

सफलराष्ट्रनिर्माणमकरोत्। तात्कालिके समाजे क्वचिद् बालविधवानां करुणक्रन्दनम्, अनाथशिशूनां हृदयविदीर्णकरं प्ररोदनं, अबलानां च स्थितिरतिशोचनीया संजाता आसीत्। सर्वक्षेत्रेषु ता अपमानिता अनादृताः पददलिताश्च। इतोप्यधिक-शोचनीयास्थितिः सेवकशूद्राणाम्। एताः सर्वाः कुरीतयः महर्षिणा दूरीकृताः। भोगवाद-अध्यात्मवादयोः समन्वय एव महर्षेर्विशेषसन्देशः। समाजस्य सर्वैः जनैः पुरुषार्थिभिर्भाव्यम्। 'मत्वा कर्माणि सीव्यतीति मनुष्यः' परिभाषेयं दयानन्देनाभिमता।

भारतीयसंस्कृतेराधारस्वरूपा पुरुषार्थचतुष्टयोपाया इति महर्षेः मान्यता आसीत्। महर्षिदयानन्दो हि आर्यसंस्कृतिं वेदाध्ययनं संस्कृतभाषां हिन्दीभाषाञ्च प्रति समाजे प्रेमभावमवर्धयत् अस्पृश्यताकलङ्कञ्च पर्यमार्जयत्।

एवम्प्रकारेण वक्तुं शक्यते यत् महर्षिदयानन्दो ह्येतादृशीं सामाजिकीम् आर्थिकीं, धार्मिकीम्, आध्यात्मिकीञ्च व्यवस्थाम् अमन्वत, येन च भूतलमेवेदं स्वर्गधामरूपेण प्रवर्तेत। अथ च जन्मनो मृत्युपर्यन्तं न कोऽपि प्राणी दुखं क्लेशं वाऽनुभवेद्। सर्वत्र सत्यप्रचारप्रसारेण सर्वेषु ऐक्य-मतसंस्थापनेन द्वेषभावं विहाय परस्परसुप्रीति-संयोजनेन सर्वान् लाभान्वि-तान् कर्तुं मे प्रयत्नोऽभिप्रायश्च इति महर्षेश्चरमलक्ष्यम्।

महर्षिप्रणीत-संस्कृतवाक्यप्रबोधस्यास्य पुस्तकस्य आंग्लभाषायाम् अनुवादो विहितः प्रसिद्धविदुषा डॉ० खजानसिंहगुलियामहोदयेन। एतेषां महाभागानाम् अहं दिल्ली-संस्कृत-अकादमीपक्षतः हार्दिकं धन्यवादं करोमि। आशासे च पुस्तकमिदं संस्कृत-हिन्दी-आंग्लभाषा-जिज्ञासूनां कृते महदुपकारि भविष्यति इति।

सचिवः
दिल्ली-संस्कृत-अकादमी

# भूमिका

## ( महर्षिदयानन्देन मूलतः हिन्दीभाषायां लिखिताऽत्र संस्कृतेन रूपान्तरिता )

'संस्कृतवाक्यप्रबोध' इत्यस्य पुस्तकस्य विरचनं मयाऽवश्यकरणीयं कृत्यं मतं यतो हि( वर्णोच्चारण- )शिक्षा-मधीत्य विद्यार्थिनां किञ्चित्किञ्चित्संस्कृतसम्भाषणं तेषामुत्साहवर्धनहेतुरेव। यदा ते व्याकरणस्य सन्धिविषयादिसम्बद्धानि पुस्तकानि पठिष्यन्ति तदा तु ते स्वत एव संस्कृतसम्भाषणज्ञानं प्राप्स्यन्त्येव। परं तस्मात्पूर्वं संस्कृतसम्भाषणे योऽभ्यासः क्रियते स भविष्यति संस्कृताध्ययने तेषां परमसाहाय्यकरो भविता। पुनश्च, ये हि व्याकरणग्रन्थाननधीत्यापि संस्कृतसम्भाषणाय उत्सहन्ते ते पुस्तकमिदं संपठ्य व्यावहारिकं संस्कृतं सम्भाषमाणाः अन्यान् च संस्कृतभाषमाणान् शृण्वन्तोऽपि किञ्चित्किञ्चित्संस्कृतमवगन्तुं शक्ष्यन्ति। बाल्ये कृतः संस्कृतसम्भाषणाभ्यासो भविष्यति सततं वर्धमानः स्थाता। तथा च परस्परं संस्कृतेन सम्भाषमाणाः बालकाः यूनो वयोवृद्धांश्च संस्कृतसम्भाषणाय रुचिमतः कर्तुं प्रेरकाः भवितार एव! अपि च संस्कृतसम्भाषणं तत्रापि उपयोगि भविष्यति यत्र असंस्कृतज्ञानां मध्ये संस्कृतभाषिणोऽन्योऽन्यं स्वकीयं गुप्तमुद्देश्यं प्रेषयितुकामाः।

यदा एतद्ग्रन्थस्थानि वाक्यानि अध्यापकाः पाठयेयुस्तदा तादृशान्येवान्यानि नवानि वाक्यानि संरच्य विद्यार्थिनां समक्षे श्रावयेयुः येन तादृशानि अपराणि वाक्यानि विद्यार्थिनो बुद्धिगम्यानि स्युः। तथा च विद्यार्थिनोऽपि वाक्यमेकं सम्पठ्य तत्सदृशान्यन्यानि वाक्यानि रचयेयुः येनातिशीघ्रं तद्गतो बोधो भवेत्। परं तैः

स्पष्टाक्षरैः, शुद्धोच्चारणैः, सार्थकैश्च भूत्वा वस्तुविषयदेशकालानुकूल्यं च सम्मान्य सम्भाषणीयम्। अन्यभाषितानि वाक्यानि च दत्तावधानैः श्रुत्वा बोधव्यानि। प्रसन्नमुखत्वं, धैर्य, निरभिमानित्वं, गाम्भीर्यं चादीन् गुणान् धृत्वा, क्रोधं, चापल्यम्, अभिमानं, तुच्छत्वादीन् दोषान् परित्यज्य स्वस्य कस्याप्यन्यस्य सत्यमन्तव्यस्य खण्डनम्, असत्यपक्षस्य मण्डनं च न कदापि करणीयम्। एवञ्च सत्यग्रहणे संलग्नैः स्थातव्यम्।

अस्मिन्ग्रन्थे संस्कृतवाक्यानि पूर्वं दत्तानि, पुनश्च तेषां समक्षे[1] तेषां भाषार्थाः लिखिताः येन पाठकाः सौविध्यं प्राप्य संस्कृताद्भाषायां भाषायाश्च संस्कृते रूपान्तरणं कर्तुं शक्नुयुः।

काशी, फा.शु. ११<br>
१९३६ वि.

हस्ता-<br>
दयानन्दसरस्वती

---

[1]परमस्मिंस्त्रिभाषीयसंस्करणे आंग्लहिन्दीरूपान्तरणे प्रत्येकं संस्कृतवाक्यस्याध एव दत्ते स्तः।

# भूमिका

मैंने इस 'संस्कृतवाक्यप्रबोध' पुस्तक को बनाना आवश्यक इसलिये समझा है कि शिक्षा को पढ के कुछ-कुछ संस्कृत भाषण का आना विद्यार्थियों को उत्साह का कारण है। जब वे व्याकरण के सन्धिविषयादि पुस्तकों को पढ लेंगे तब तो उनको स्वतः ही संस्कृत बोलने का बोध हो जायेगा, परन्तु यह जो संस्कृत बोलने का अभ्यास प्रथम किया जाता है वह भी आगे-आगे संस्कृत पढ़ने में बहुत सहाय करेगा। जो कोई व्याकरणादि ग्रन्थ पढ़े विना भी संस्कृत बोलने में उत्साह करते हैं वे भी इसको पढ़के व्यवहारसम्बन्धी संस्कृत भाषा को बोल और दूसरे का सुनके भी कुछ-कुछ समझ सकेंगे। जब बाल्यावस्था से संस्कृत के बोलने का अभ्यास होगा तो उनको आगे-आगे संस्कृत बोलने का अभ्यास अधिक-अधिक ही होता जायेगा। और जब बालक भी आपस में संस्कृत भाषण करेंगे तो उनको देखकर जवान् वृद्ध भी संस्कृत बोलने में रुचि अवश्य करेंगे। जहां कहीं संस्कृत के नहीं जानने वाले मनुष्यों के सामने दूसरे को अपना गुप्त अभिप्राय समझाना चाहें तो वहां संस्कृत भाषण काम आता है।

जब इसके पढ़ाने वाले विद्यार्थियों को ग्रन्थस्थ वाक्यों को पढ़ावें उस समय दूसरे वैसे ही नवीन वाक्य बनाकर सुनाते जावें, जिससे पढ़ने वालों की बुद्धि बाहर के वाक्यों में भी फैल जाय। और पढ़नेवाले भी एक वाक्य को पढ़ के उसके सदृश अन्य वाक्यों की रचना भी करें कि जिससे बहुत शीघ्र बोध हो जाये। परन्तु वाक्य बोलने में स्पष्ट अक्षर, शुद्धोच्चारण,

सार्थकता, देश और काल वस्तु के अनुकूल जो पद जहां बोलना उचित हो वहीं बोलना और दूसरे के वाक्यों पर ध्यान देकर सुनके समझना। प्रसन्नमुख, धैर्य, निरभिमान और गम्भीरतादि गुणों को धारण करके क्रोध, चपलता, अभिमान और तुच्छतादि दोषों से दूर रहकर अपने वा किसी के सत्य वाक्य का खण्डन और अपने अथवा किसी के असत्य का मंडन कभी न करें और सर्वदा सत्य का ग्रहण करते रहें।

इस ग्रन्थ में संस्कृतवाक्य प्रथम और उसके सामने[अ] भाषार्थ इसलिये लिखा है कि पढ़नेवालों को सुगमता हो और संस्कृत की भाषा और भाषा का संस्कृत भी यथायोग्य बना सके।

काशी, फा.शु. ११ हस्ता–
१९३६ वि. दयानन्दसरस्वती

---

[अ]नोट : किन्तु इस त्रिभाषीय संस्करण में हिन्दी व अंग्रेजी रूपान्तरण संस्कृत वाक्यों के नीचे ही दिये गये हैं।

# INTRODUCTION

(English translation of *bhoomika* originally written in Hindi by Maharshi Dayanand)

I regarded writing the book entitled *Sanskrit Vakyaprabodha* as essential because after having read *Varnochcharan Shiksha* students feel spirited if they are able to speak a bit of Sanskrit. Later on when they go through grammar books carrying subjects like *Sandhi*, etc. they will themselves acquire the knowledge of speaking Sanskrit. But the practice in spoken Sanskrit carried out beforehand is of great help in the study of this language afterwards as one goes ahead and further ahead. Even those who feel inspired to speak Sanskrit without having gone through books of grammar, etc. too will be able to understand some Sanskrit by reading this book, and further by speaking to and listening from others day-to-day communicative Sanskrit. When one acquires practice in spoken Sanskrit in childhood this practice gets further strengthened by and by as one advances. Besides, seeing children conversing in Sanskrit, the grown-ups and the older people are also bound to develop interest in speaking Sanskrit. Also, Sanskrit speaking stands in good stead when some secret communication is sought to be made between Sanskrit-knowing people in the presence of those not conversant with this language.

While teaching the sentences in this book the teachers should construct new sentences on the pattern of given sentences, and speak them out to their students so that the latter are able to apply this understanding in the construction of similar sentences also. Thus the students should be able to

create new sentences similar to the ones given in this book which will help them in a quicker comprehension of the language. However, they should speak sentences clearly distinguishing each sound, and correctly pronouncing them, and also ensuring correct communication. They should also ensure that a word or a phrase should be used in consonance with the topic, place and time, and also ensure to understand attentively the purport of their interlocutors' utterances. Imbibing virtues of cheerfulness, patience, humility and seriousness, and shedding vices of being short-tempered, whimsical, vain and trivial they should never disparage their own or any other's true stand, and never support their own or others' wrong and false stance. Thus they should always keep on owning and embracing truth.

Sanskrit sentences in this book have been given first and their Hindi version in their front[1] so that readers feel facilitated, and are able to convert Sanskrit into Hindi and *vice-versa*, as required.

Kashi, Falgun, Shukla 11
1936 Vikrami

Sd/-
Dayanand Saraswati

[1] However, in the present trilingual edition Hindi and English versions have been given beneath the Sanskrit sentences.

# अनुवादकीयम्

महर्षिदयानन्दकृतसंस्कृतवाक्यप्रबोध इत्याख्यपुस्तकस्थानां संस्कृतवाक्यानामांग्लभाषारूपान्तरणं कारयितुं दिल्ली-संस्कृत-अकादम्या कृतानुरोधोऽहमेतत्कार्यार्थं सहर्षमुद्यतोऽभवम्। पुस्तकेऽस्मिन् संस्कृतवाक्यानां हिन्दीरूपान्तरणं विद्वल्लेखकेन हिन्दीभाषिक्षेत्रस्थानां शिक्षार्थिनां कृते पूर्वत एव दत्तम्। आंग्लरूपान्तरणप्रापणे स्पष्टतोऽकादम्या उद्देश्योऽयं संस्कृतशिक्षकं पुस्तकमिदं भृशं प्रचरेत् प्रसरेच्चेति। देशेऽस्माकं बहूनि क्षेत्राणि सन्ति यत्र हिन्दीभाषा न तु भाष्यते न चाप्यवगम्यते। तथापि तत्र संस्कृतं रुचिपूर्वकं पठ्यते पाठ्यते च। केषुचित्क्षेत्रेषु कासुचित्संस्थासु च संस्कृतमांग्लभाषामाध्यमेनैवाधीयतेऽध्याप्यते च। एतादृशाणां क्षेत्राणां कृते पुस्तकमिदं महदुपयोगि भविष्यतीति न अत्र सन्देहावसरः। श्रूयते अकादमीयं पुस्तकस्यास्य पंजाबी-रूपान्तरणकृतेऽपि प्रयासरता। अस्तु, यावतीस्वपि भाषासु पुस्तकस्यास्य रूपान्तरणं क्रियेत तावदेव संस्कृतभाषायै भद्रतरं भविता।

'संस्कृतवाक्यप्रबोधः' प्रथमदृष्ट्या हिन्दीभाषातः संस्कृतेऽनुवादशिक्षकं किमपि पुस्तकं प्रतिभाति। परमाकलनमेतन्नहि समीचीनम्। नहि पुस्तकमिदं व्याकरणानुवादमाध्यमेन संस्कृतं शिक्षयति। पुस्तकस्यास्योद्देश्योऽद्यतनीयातिलोकप्रियविश्वविख्यातभाषावैज्ञानिकैः सम्मतं द्वितीय-भाषाशिक्षणस्य प्रत्यक्षभाषाशिक्षणविधिः (Direct Method of Teaching a Second Language) इत्येनमाश्रित्य शिक्षार्थिनां संस्कृतसम्प्रेषणक्षाम्यवर्धनम्। स्वामिदयानन्देनेयं पद्धतिः विंशतिशताब्द्यामस्या आगमनात् प्रायेण शतवर्षपूर्वमेव प्रशंसिता स्वीकृता च। अस्मादेव स्वामिवर्यः

पुस्तकस्यास्य भूमिकायां पद्धतिमिमाम् एवं स्पष्टीकरोतिः- व्याकरणग्रन्थाननधीत्यापि पुस्तकमिदं संपठ्य बालकाः व्यावहारिकं संस्कृतं सम्भाषमाणाः अन्यांश्च संस्कृतसम्भाषमाणान् शृण्वन्तः संस्कृतमवगन्तुं शक्ष्यन्ति। पुनश्च ऋषिणाऽध्यापकाः विद्यार्थिनश्च बोधिताः-एतत्पुस्तकस्थानि वाक्यान्यनुसृत्य ते नवान्यन्यानि बहूनि वाक्यानि रचयेयुः येन तेषां संस्कृतसम्प्रेषणसामर्थ्यं वर्धेत पुष्येत च। एवं परोक्षतो विद्वल्लेखको दर्शयति न सस्कृतं मृतभाषा न चापि केवलं पुस्तकालयीयभाषैव, अपितु जीवन्तीयं भाषा दैनिकव्यवहाराय च पूर्णरूपेणोपयुक्तेयं भाषेति। दयानन्दर्षेरिमां भावनां सम्मान्यमानाः संस्कृतानुरागिणो वयं भाषाया अस्या भृशं प्रचारं कुर्यामेत्यहं कामये।

कस्यापि देशस्य समुदायस्य वा सांस्कृतिकानां दार्शनिकानां धार्मिकाणां च विचाराणां कस्यामपि दूरस्थदेशीयभाषायां रूपान्तरण-करणं नातिसरलम्। रूपान्तरणकारस्य काठिन्यं वर्धते यदि द्वयो-र्भाषयोः एकाऽपि पुरातना भवेत्। प्रत्येकं शब्दाय लक्षित-भाषायामुपयुक्तशब्दो न मिलति। संस्कृते अनेके शब्दा एवंविधा येषां भावः सामान्यतया-आंग्लभाषायां यथार्थतः प्रकटयितुं शक्यत एव न। न भवेत्किमपि उभयभाषारूपयोरन्तरमित्येतदर्थं प्रयासं कुर्वाणेनाप्यनुवादकेन यदाऽनुभूयते रूपान्तरणं क्षीणतेजो जातं तदा स विवशीभूय इटैलिक्समुद्रणमाश्रय्य मूलशब्दान् प्रयुङ्क्ते। तदेवात्र मया कृतं। स्थित्यामस्यां नान्यो विद्यते व्याजः क्षमार्थित्वं गमनात्।

रूपान्तरणकरणेऽत्र प्रयासः कृतो वाक्यानां मूलभावः शब्दान् अतिरिच्येतेति। परम अत्र शब्दा अपि नोपेक्षिताः। अस्माद् बहुधा वैकल्पिकरूपमजायत। एतादृश्यां स्थित्यां वैकल्पिकरूपं

कोष्ठकयोः प्रदत्तम्। **अत्र वैकल्पिकरूपस्य प्रयोगोऽवधानेन कर्त्तव्यः पाठकैः। कोष्ठकयोः प्रदत्तं वैकल्पिकरूपं केवलं तस्यैव भागस्य स्थानापन्नं यो हि रेखाङ्कितः कृतः। परं यत्रापि कोष्ठकयोः प्रयोगो रेखाङ्कितरूपं नानुसरति तत्र कोष्ठकयोः दत्तोऽंशो वाक्यस्यैव अङ्गं मत्वा पठितव्यः।**

अहं कृतज्ञोऽस्मि फरीदाबादस्थ-समादरणीयानां प्रो. रामवीर (हरियाणा सर्वकारस्य उच्चतर-शिक्षा-विभागतः सेवानिवृत्तानाम्) यैः पुस्तकस्यास्य मुद्रणपूर्वप्रारूपं विमृश्यान्तर्वीक्ष्य चानेकशः परामर्शं प्रदाय अस्याङ्गलभाषारूपस्य गुणवत्ता वर्धिता।

अन्ते च दिल्ली-संस्कृत-अकादम्याः पदाधिकारिणो विशेषतश्च अस्याः विद्वांसः सचिवाः डॉ. धर्मेन्द्रकुमारमहोदयाः मे धन्यवादार्हाः यैः मह्यं रूपान्तरणकार्यं प्रदाय महर्षेः संस्कृतानुरागभावं प्रसारयितुमवसरः प्रदत्तः।

(स्वतन्त्रता-दिवसः)
विदुषां वशंवदः
15 अगस्त, 2013

– डॉ. खजानसिंह-गुलिया
73/14, रोहितकम् (हरियाणा)
चलभाषांकः 09354142285

# अनुवादकीय

दिल्ली संस्कृत अकादमी ने मुझ से अनुरोध किया कि मैं महर्षिदयानन्दकृत 'संस्कृतवाक्यप्रबोधः' नाम की पुस्तिका में दिये हुये संस्कृत वाक्यों का अंग्रेजी में अनुवाद करूं, जिसे मैंने सहर्ष स्वीकार कर लिया। इस पुस्तिका में पहले से ही महर्षि ने हिन्दी-भाषी लोगों के लाभार्थ वाक्यों का हिन्दी रूपान्तर उपस्थित है। अकादमी का अंग्रेजी में अनुवाद करवाने का स्पष्टतया उद्देश्य यही है कि इस संस्कृत सिखाने वाली पुस्तक को अधिकाधिक प्रचार-प्रसार मिले। भारत के बड़े भाग में अब भी हिन्दी न तो अच्छी तरह बोली जाती है और न ही समझी जाती है, फिर भी वहां संस्कृत भाषा को बड़ी रुचिपूर्वक पढ़ा व पढ़ाया जाता है। और कुछ क्षेत्र व संस्थायें तो ऐसी हैं जहां संस्कृत को अंग्रेजी के माध्यम से सीखा और सिखाया जाता है। यह अंग्रेजी अनुवाद ऐसे क्षेत्रों की आवश्यकता को पूरा करने के लिये ही करवाया गया है। पता लगा है कि इस पुस्तक का पञ्जाबी में अनुवाद करवाने के लिये भी प्रयास किया जा रहा है। अस्तु, जितनी भी अधिक भाषाओं में इस पुस्तक का अनुवाद हो उतना ही संस्कृत भाषा के स्वास्थ्य के लिये अच्छा रहेगा। हमें इस भाषा के स्वास्थ्य का ध्यान रखना है क्योंकि यह भारतीय धरोहर व विचारधारा की संवाहक है।

'संस्कृतवाक्यप्रबोधः' पुस्तक को देखकर प्रथमदृष्ट्या ऐसा लगता है जैसे यह हिन्दी से संस्कृत में अनुवाद सिखाने वाली कोई पुस्तक होवे जो कि सही आकलन नहीं है। यदि ऐसा होता तो इसमें पहले सरल और फिर कठिन और

कठिनतर वाक्यों को बनाना सिखाने का प्रयास होता। परन्तु ऐसा नहीं है। यह पुस्तक अनुवाद व व्याकरण सिखाकर संस्कृत सिखाने वाली पुस्तक नहीं है अपितु इस पुस्तक का उद्देश्य है द्वितीय या विदेशी भाषा शिक्षण के लिये आज की लोकप्रिय, व प्रसिद्ध भाषावैज्ञानिकों द्वारा अनुमोदित प्रत्यक्ष-भाषा-शिक्षण विधि पर आश्रित होते हुये, भाषायी सम्प्रेषण सिखाना। देखिये स्वामी दयानन्द ने इस विधि को, इसके लोकप्रिय होने से शत वर्ष पूर्व ही अपना लिया। इसीलिये वे इस पुस्तक के लिये लिखी गई भूमिका में लिखते हैं कि विद्यार्थी के व्याकरण सीखने के पहले ही उसे संस्कृत बोलनी आ जाये यही इस पुस्तक का उद्देश्य है। उन्होंने कुछ वाक्यों की संरचना देकर शिक्षक व शिक्षार्थियों से यह अपेक्षा की है कि वे उन्हीं संरचनाओं पर और वाक्य बनायें और अभ्यास करें जिससे उनका संस्कृत-सम्प्रेषण पुष्ट होवे। इस प्रकार उन्होंने परोक्षतः यह बताने का प्रयास किया है कि संस्कृत को मृतभाषा या केवल पुस्तकालयीय भाषा ही न माना जाये अपितु इसे जीवन्त मानते हुये इसे दैनिक व्यंवहार के प्रयोग में लाया जाये। अतः स्वामी दयानन्द की इस भावना को उचित आदर देते हुये यह उपयुक्त ही होगा यदि इस पुस्तक का अधिकाधिक प्रचार-प्रसार होवे।

इस पुस्तक में दिये गये वाक्यों के अंग्रेजी में अनुवाद का जहां तक सम्बन्ध है यह कहना होगा कि किसी भी देश या समुदाय के सांस्कृतिक, धार्मिक, दार्शनिक, आध्यात्मिक विचारों का किसी दूरस्थ देश की भाषा में अनुवाद करना एक कठिन कार्य होता है। कठिनाई और भी बढ़ जाती है यदि मूल

भाषा अथवा अनुवाद की भाषा पुरानी हो। अनुवादक को प्रत्येक शब्द के लिये लक्षित भाषा में ऐसा शब्द ढूंढना पड़ता है जो वही भाव व्यक्त करता हो जो मूल भाषा के शब्द का हो। यह कितना चुनौती भरा काम होता है उसका पाठक अनुमान लगा सकते हैं। संस्कृत के अनेक ऐसे शब्द हैं जिनका समानार्थक अंग्रेजी में सामान्यतया नहीं मिलता। ऐसी स्थिति में मूलशब्द को ही ले लेना विवशता थी अतः उन्हें इटैलिक्स टाइप में मुद्रित कर दिया गया है। कुछ भी हो, अनुवाद अनुवाद ही होता है, उसका मुकाबला मूलभाषा में लिखी गयी सामग्री से नहीं किया जा सकता।

यहां अंग्रेजी रूप देते समय शब्दों की अपेक्षा भाव को अधिक महत्त्व दिया गया है। इसलिये प्रायः अंग्रेजी के वाक्यों में जहां वैकल्पिक रूप देना हुआ तो वाक्य के उस भाग को रेखांकित करके कोष्ठकों में बराबर (=) का चिन्ह देकर उस रूप को दिया है। प्रायः पहले दिया हुआ भाग कोष्ठकों में दिये हुये भाग से भाव के अधिक समीप समझा गया है। **किन्तु यह ध्यान रहे कि कोष्ठकों में दिया गया भाग केवल उतने ही भाग का स्थानापन्न है जितने भाग को रेखाङ्कित किया गया है। अनेक स्थानों पर अंग्रेजी रूपान्तरण में कोष्ठकों का प्रयोग अन्यथा भी हुआ है जो किसी रेखाङ्कित भाग के स्थानापन्न देने के लिये नहीं किया गया अपितु संस्कृत के वाक्य में निहित भाव को पूरी तरह स्पष्ट करने के लिये किया गया है। कोष्ठकों का प्रयोग इसलिये करना पड़ा क्योंकि मूल संस्कृत वाक्य में भाव होते हुये भी समानान्तर शब्दों का प्रयोग नहीं हुआ है।**

मैं फरीदाबाद निवासी समादरणीय प्रो. (डॉ.) रामवीर (हरियाणा सरकार के उच्चतर शिक्षा विभाग से सेवानिवृत्त) का आभारी हूँ जिन्होंने इस पुस्तक की पाण्डुलिपि पढ़ कर अनेक उपयोगी सुझाव देकर विशेषतया इसके अंग्रेजी रूपान्तरण को समृद्ध किया है।

अन्त में मैं दिल्ली संस्कृत अकादमी के पदाधिकारियों, विशेषतया अकादमी के सचिव डॉ. धर्मेन्द्र कुमार का हृदय से धन्यवाद करता हूं कि उन्होंने मुझे संस्कृत से अंग्रेजी में रूपान्तरित करने का कार्य देकर महर्षि के संस्कृत प्रेमभाव को प्रसारित करने का सुअवसर प्रदान किया।

**–डॉ० खजान सिंह गुलिया**

15 अगस्त, 2013 73/14, रोहतक।

# TRANSLATORIAL

Delhi Sanskrit Academy entrusted to me the task of translating Sanskrit sentences given in Maharshi Dayanand's book *Sanskritvakyaprabodhah* into English. This book already carries their Hindi version for the facility of Hindi region students. The purpose of the Academy in seeking their English version obviously is to acquire a wider reach for the book. In a large area in India Hindi is not the spoken or even the comprehended language, and yet Sanskrit is being taught and learnt with great interest there. In some of these areas Sanskrit is being learnt and taught through the medium of English. It is to cater to the needs of such areas that the English version is being procured. I am told that an attempt is being made at securing a Panjabi version also of this book. In any case, the more the languages it is translated into the better it would be for the health of Sanskrit language which is the repository of Indian ethos, to be brief.

*Sanskritvakyaprabodhah* as some may mistake it to be on its first sight is not a book teaching translation from Hindi into Sanskrit, and has therefore, not been graded on the pattern of simple to difficult and more difficult sentences and structures. ***As a matter of fact it seeks to teach communicative Sanskrit not through the translation-grammar method but through the direct method of teaching a second language which is very popular and is in vogue these days as a method***

***approved by great linguists disparaging the grammar-translation method. Swami Dayanand had visualized about a century earlier the utility of the direct method.*** That is why he says in the introduction to this book that before a student comes to learn Sanskrit grammar he should be able to speak some Sanskrit for which purpose the Swami created this book. So he has given certain patterns of sentences on which the teachers should teach their students to form more and more sentences and give practice in spoken Sanskrit. Thus it is apparent that Swami Dayanand treats Sanskrit as a live language against the popular perception that it is a dead language, and is at best a library language. So to honour the great Swami's endeavour it is only in the fitness of things that such books as *Sanskrit-vakyaprabodhah* should be given wider and wider publicity as is being done by Delhi Sanskrit Academy.

Coming to the present attempt at translation into English, it is being admitted frankly here that it is very difficult to put the religious, spiritual, philosophical, technological, familial and civilization-related ideas of one nation or community into a language other than its own. Things become more difficult if either of the languages is an ancient one. The translator has to find out an exact equivalent of the word of the original language into the target language communicating the very sense and connotation carried in the word. This surely is a more challenging task than the readers of the translated version imagine. These difficulties were experienced even in case of apparently small and simple sentences. Help was

secured from some knowledgeable sources and yet no easy equivalent could be found in case of certain words. In some of such cases the original Sanskrit or Indian word was retained and italicized, instead of putting in its place a highly technical and unclear word. However, attempt has been made to convey the purport of the original to the extent it was possible, such constraints notwithstanding. All the same, translation is translation and cannot match the original in the efficacy of communication for which only apologies can be offered.

While giving English version of sentences the sense contained in the original sentences was regarded as more important than the words used in the sentences. But words have also been given due consideration. This consideration has led to, in some cases, an alternative version in English. **In such cases, it must be noted that the version given enclosed in the brackets is a substitute of only that part of the first version which has been underlined. Bracketed parts in English version which do not follow any underlined portion have been used to make the sense of a Sanskrit sentence fully clear. Such parts, therefore, may be read as a portion of the English version. Brackets in such cases have been used only because often the Sanskrit sentence carries only the sense to that effect and not the corresponding words.**

I am beholden to Prof. (Dr.) Ramvir of Faridabad (Retired from Dept. of Higher Education, Govt. of Haryana) who went through the manuscript of the book

and made valuable suggestions enhancing the quality particularly of the English version.

At the end I would express my sense of gratitude to the office bearers, and particularly **Dr. Dharmendra Kumar**, Secretary of the Academy, who gave me an opportunity to serve the cause of Sanskrit language which was so dear to Maharashi Dayanand.

15 August 2013
Independance Day.

Dr. Khazan Singh Gulia
73/14, Rohtak
Haryana. 124001
Mobile: 09354142285

# विषयसूचीपत्रम्
# INDEX

ओ३म्

OM

परमगुरवे परमात्मने नमः

A Bow to God, the Foremost Preceptor.

# अथ संस्कृतवाक्यप्रबोधः

## Now begins the book 'Sanskritavakyaprabodhah'

## १. गुरुशिष्यवार्तालापप्रकरणम्

## 1. Conversation between the Teacher and the Student

1. **संस्कृतः-** भोः शिष्य उत्तिष्ठ प्रातःकालो जातः।
   **हिन्दीः-** हे शिष्य! उठ सवेरा हुआ।
   **English:-** Student! Get up. It is morning.
2. उत्तिष्ठामि।
   उठता हूँ।
   I am getting up.
3. अन्ये सर्वे विद्यार्थिन उत्थिता न वा?
   और सब विद्यार्थी उठे या नहीं?
   Have all other students got up or not?
4. अधुना तु नोत्थिताः खलु।
   अभी तो नहीं उठे हैं।
   So far, they haven't got up.

5. तानपि सर्वानुत्थापय।
   उन सब को भी उठा दे।
   Get all of them up also. (=Awaken/waken/wake all of them also).
6. सर्व उत्थापिताः।
   सब उठा दिये।
   All have been awakened / wakened/woken.
7. सम्प्रत्यस्माभिः किं कर्त्तव्यम्?
   इस समय हमको क्या करना चाहिये?
   What shall (=should) we do now?
8. आवश्यकं शौचादिकं कृत्वा सन्ध्यावन्दनम्।
   आवश्यक शरीरशुद्धि करके सन्ध्योपासना।
   (You should) offer benedictory prayers to God after carrying out essential cleanliness, etc. of the body.
9. आवश्यकं कृत्वा सन्ध्योपासिताऽतः परमस्माभिः किं करणीयम्?
   आवश्यक कर्म करके सन्ध्योपासना कर लिया, इसके आगे हम को क्या करना चाहिए?
   We have offered benedictory prayers after carrying out morning essentials. What shall (=should) we do hereafter?
10. अग्निहोत्रं विधाय पठत।
   अग्निहोत्र करके पढ़ो।

Carry out studies after performing *yajna*.

11. पूर्वं किं पठनीयम्?
पहिले क्या पढ़ना चाहिये?
What shall (=should) we study first?

12. वर्णोच्चारणशिक्षामधीध्वम्।
वर्णोच्चारणशिक्षा को पढ़ो।
Study Phonetics (=the book teaching the pronunciation of letters, etc.)

13. पश्चात्किमध्येतव्यम्?
पीछे क्या पढ़ना चाहिये?
What should be read thereafter?

14. किंचित्संस्कृतोक्तिबोधः क्रियताम्।
कुछ संस्कृत बोलने का ज्ञान किया जाय।
Acquire some knowledge in spoken Sanskrit.

15. पुनः किमभ्यसनीयम्?
फिर किसका अभ्यास करना चाहिये?
What should be practised thereafter?

16. यथायोग्यव्यवहारानुष्ठानाय प्रयतध्वम्।
यथोचित व्यवहार करने के लिए प्रयत्न करो।
Try to comply with the rules of proper etiquette.

17. कुतोऽनुचितव्यवहारकर्तुर्विद्यैव न जायते।
क्योंकि उलटे व्यवहार करने वाले को विद्या ही नहीं होती।

Because one who violates etiquette does not acquire knowledge and learning.

18. को विद्वान् भवितुमर्हति?
    कौन मनुष्य विद्वान् होने के योग्य होता है?
    Who is fit to be <u>a scholar</u> (= scholarly)? OR
    Who can become <u>scholarly</u> (=a scholor)?

19. यः सदाचारी प्राज्ञः पुरुषार्थी भवेत्।
    जो सत्याचरणशील, बुद्धिमान्, पुरुषार्थी हो।
    One who is virtuous, wise and industrious.

20. कीदृशादाचार्यादधीत्य पण्डितो भवितुं शक्नोति?
    कैसे आचार्य से पढ़कर पण्डित हो सकता है?
    Learning from what kind of teacher can one become a scholar?

21. अनूचानतः।
    पूर्ण विद्यावान् वक्ता से।
    From one who is highly learned and articulate.

22. अथ किमध्यापयिष्यते भवता?
    अब आप इसके अनन्तर हमको क्या पढ़ाइयेगा?
    What will you teach hereafter?

23. अष्टाध्यायीमहाभाष्यम्।
    अष्टाध्यायी और महाभाष्य।
    *Ashtadhyayee* and *Mahabhashyam*.

24. किमनेन पठितेन भविष्यति?

इसके पढ़ने से क्या होगा?

What will be the benefit of studying this?

25. शब्दार्थसम्बन्धविज्ञानम्।

शब्द अर्थ और सम्बन्धों का यथार्थबोध।

(One acquires) knowledge of words, their meanings and their inter-relationship

26. पुनः क्रमेण किं किमध्येतव्यम्?

फिर क्रम से क्या-क्या पढ़ना चाहिये।

What is the next in order for studying?

27. शिक्षाकल्पनिघण्टुनिरुक्तछन्दोज्योतिषाणि वेदानामङ्गानि मीमांसावैशेषिकन्याययोग-सांख्यवेदान्तान्युपाङ्गान्यायु-र्धनुर्गान्धर्वार्थानुपवेदानैतरेयशतपथसामगोपथब्राह्मणान्यधीत्य ऋग्यजुस्सामाऽथर्ववेदान् पठत।

शिक्षा, कल्प, निघण्टु, निरुक्त, छन्द और ज्योतिष वेदों के अंग। मीमांसा, वैशेषिक न्याय, योग, सांख्य और वेदान्त उपाङ्ग आयुर्वेद, धनुर्वेद, गान्धर्ववेद, और अर्थवेद उपवेद। ऐतरेय, शतपथ, साम और गोपथ ब्राह्मण ग्रन्थों को पढ़के ऋग्वेद, यजुर्वेद, सामवेद और अथर्ववेद को पढ़ो।

Having read the Vedangas, *i.e.*, Shiksha, Kalpa, Nighantu, Nirukta, Chhand (prosody), Jyotish (Astronomy) and the Upangas *i.e.* Meemansa, Vaisheshika, Nyaya, Yoga, Sankhya and Vedanta and Upavedas *i.e.* Ayurveda,

Dhanurveda, Gandharvaveda and Arthaveda, and Brahmanas, *i.e.,* Aitraya, Shatpath, Sama and Gopatha, you should read the Rigveda, the Yajurveda, the Samaveda and the Artharvaveda.

28. एतत्सर्वं विदित्वा किं कार्य्यम्?

इन सबको जानकर फिर क्या करना चाहिये?

Having acquired all this knowledge what should be done next?

29. धर्मजिज्ञासाऽनुष्ठाने एतेषामेवाऽध्यापनं च।

धर्म के जानने की इच्छा तथा उसका अनुष्ठान और इन्हीं को सदा पढ़ाना।

Develop an urge for knowing *dharma* (=righteousness), practising it and then teaching it.

## २. नामनिवासस्थानप्रकरणम्

## 2. Names and Places of Residence

30. तव किन्नामास्ति?

तेरा क्या नाम है?

What is your name?

31. देवदत्तः।

देवदत्त।

Devadatta (is my name).

32. कोऽभिजनो युवयोर्वर्त्तते?

तुम दोनों का अभिजनदेश कौन है?

What is the native place of the two of you?

33. कुरुक्षेत्रम्।

कुरुक्षेत्र।

(It is) Kurukshetra.

34. युष्माकं जन्मदेशः को विद्यते?

तुम्हारा जन्मदेश कौन है?

What is the country of your birth?

35. पञ्चालाः।

पञ्जाब।

(It is) the Punjab.

36. भवन्तः कुत्रत्याः?

आप कहां के हो?

Where do you come from? (=Which place do you belong to?)

37. वयं दाक्षिणात्याः स्मः।

हम दक्षिणी हैं।

We are from the south.

38. तत्र का पूर्वः?

वहां आपके निवास की कौन नगरी है?

Which is your home town there?

39. मुम्बापुरी।

मुम्बई।

(It is) Mumbai.

40. इमे क्व निवसन्ति?
ये लोग कहां रहते हैं?
Where do these people live?

41. नेपाले।
नेपाल में।
(They live) in Nepal.

42. अयं किमधीते?
यह क्या पढ़ता है?
What is he studying?

43. व्याकरणम्।
व्याकरण को।
(He is studying) grammar.

44. त्वया किमधीतम्?
तूने क्या पढ़ा है?
What have you studied?

45. न्यायशास्त्रम्।
न्यायशास्त्र।
Nyayashastram (= Logic).

46. भवता किं पठितमस्ति?
आपने क्या पढ़ा है?
What have you studied?

47. पूर्वमीमांसाशास्त्रम्।

पूर्वमीमांसाशास्त्र।

(I have studied) the Purva Meemansa Shastram.

48. अयं भवदीयश्छात्रः किं प्रचर्चयति?

यह आपका विद्यार्थी क्या पढ़ता है?

What is this student of yours studying?

49. ऋग्वेदम्।

ऋग्वेद को।

(He is studying) the Rigveda

50. त्वं कुत्र गच्छसि?

तू कहां जाता है?

Where are you going?

51. पाठाय व्रजामि।

पढ़ने के लिए जाता हूं।

I am going for studying.

52. कस्मादधीषे?

किससे पढ़ता है?

By whom are you being taught? (= From whom are you learning?)

53. यज्ञदत्तादध्यापकात्।

यज्ञदत्त अध्यापक से।

By Yajnadatta, the teacher. (= From Yajnadatta, the teacher.)

54. इमे कुतोऽभ्यस्यन्ति?

ये किससे पढ़ते हैं?

By whom are these being taught? (= From whom are they learning?)

55. विष्णुमित्रात्।

विष्णुमित्र से।

By Vishnumitra. (= From Vishnumitra.)

56. तवाध्ययने कियन्तः संवत्सरा व्यतीताः?

तुम को पढ़ते हुए कितने वर्ष बीते?

How many years have passed since you started studying? (= Since when have you been studying?)

57. पञ्च।

पांच।

Five (years have passed).

58. भवान् कति वार्षिकः?

आप कितने वर्ष के हुए?

How old are you?

59. त्रयोदशवार्षिकः।

तेरह वर्ष का।

Thirteen years old.

60. त्वया पठनारम्भः कदा कृतः?

तूने पढ़ने का आरम्भ कब किया था?

When did you start studying?

61. यदाऽहमष्टवार्षिकोऽभूवम्।
जब मैं आठ वर्ष का हुआ था।
When I became (= got) eight years old.

62. तव मातापितरौ जीवतो न वा?
तेरे माता-पिता जीवित हैं या नहीं?
Are your parents alive or not?

63. विद्येते।
जीवित हैं।
They are alive.

64. तव कति भ्रातरो भगिन्यश्च?
तेरे कितने भाई और बहिन हैं?
How many brothers and sisters do you have?

65. त्रयो भ्रातरश्चैका भगिन्यस्ति।
तीन भाई और एक बहिन है।
(I have) three brothers and one sister.

66. तेषु त्वं ज्येष्ठस्ते, सा वा?
उनमें तू ज्येष्ठ वा तेरे भाई अथवा बहिन?
Who is the eldest among them: you, they or she?

67. अहमेवाग्रजोऽस्मि।
मैं ही सबसे पहिले जन्मा हूं।
It is me who was born first (= is the eldest).

68. तव पितरौ विद्वांसौ न वा?

तेरे माता-पिता विद्या पढ़े हैं वा नहीं?

Are your parents learned or not?

69. महाविद्वांसौ स्तः।

बड़े विद्वान् हैं।

They are both great scholars?

70. तर्हि त्वया पित्रोः सकाशात्कुतो न विद्या गृहीता?

तो तूने माता-पिता से विद्या ग्रहण क्यों नहीं की?

Then why didn't you receive education from your parents?

71. अष्टमवर्षपर्य्यन्तं कृता।

आठवें वर्ष पर्यन्त की थी।

(I did receive education from them) upto the eighth year (of my life).

72. अत ऊर्ध्वं कुतो न कृता?

इससे आगे क्यों न की?

Why didn't you do so after this?

73. मातृमान् पितृमानाचार्य्यवान् पुरुषो वेदेति शास्त्रविधेः।

माता-पिता से आठवें वर्ष पर्यन्त, इसके आगे आचार्य से पढ़ने का शास्त्र में विधान है, इस से।

Because the scripture mandates (=ordains) that after learning from mother and father a man should go to the *acharya* (=the preceptor) for further learning.

74. अन्यच्च, गृहकार्यबाहुल्येन निरन्तरमध्ययनमेव न

जायतेऽतः।

और भी, घर में बहुत काम करने से निरन्तर पढ़ना नहीं हो सकता इसलिए भी।

Besides, because due to excessive work in the family life continuous studies cannot be (= are not) carried out at all.

75. अतः परं कियद्वर्षपर्यन्तमध्येष्यसे?

इसके आगे कितने वर्ष पर्यन्त पढ़ेगा?

For how many years will you study beyond this?

76. पञ्चत्रिंशद्वर्षाणि।

पैंतीस वर्ष तक।

For thirty five years.

## ३. गृहाश्रमप्रकरणम्

## 3. Household Life

77. पुनस्ते का चिकीर्षास्ति?

फिर तुझको क्या करने की इच्छा है?

What do you want to do then?

78. गृहाश्रमस्य।

गृहाश्रम की।

(I want) to live a householder's life.

79. किं च भोः! पूर्णविद्यस्य जितेन्द्रियस्य परोपकारकरणाय संन्यासाश्रमग्रहणं शास्त्रोक्तमस्ति, तन्न करिष्यसि?

क्यों जी! जिसको पूर्ण विद्या और जो जितेन्द्रिय है उसको परोपकार करने के लिये संन्यासाश्रम का ग्रहण करना शास्त्रोक्त है, इसको न करोगे?

Well! The scriptures say that one who has acquired full knowledge and learning, and one who has control over his sense organs should embrace a hermit's life undertaking to do welfare of others. Won't you do that?

80. किं गृहाश्रमे परोपकारो न भवति?

क्या गृहाश्रम में परोपकार नहीं हो सकता?

Can't one leading a householder's life do good to others?

81. यादृशः संन्यासाश्रमिणा कर्तुं शक्यते न तादृशो गृहाश्रमिणाऽनेककार्यैः प्रतिबन्ध- कत्वेनाऽस्य सर्वत्र भ्रमणाशक्यत्वात्।

जैसा संन्यासाश्रमी से मनुष्य का उपकार हो सकता है वैसा गृहाश्रमी से नहीं हो सकता, क्योंकि अनेक कामों की रुकावट से इसका सर्वत्र भ्रमण ही नहीं हो सकता।

The kind of welfare that can be done by a hermit cannot be done by a householder because he (= the latter) cannot go to every place, due to restrictions created by several preoccupations.

# ४. भोजनप्रकरणम्

# 4. Food

82. नित्यः स्वाध्यायो जातो भोजन समय आगतो, गन्तव्यम्।
नित्य का पढ़ना-पढ़ाना हो गया, भोजन समय आया, चलना चाहिये।
The daily self-studies have been carried out. Time to take food has come. Now you/we/I should go.

83. तव पाकशालायां प्रत्यहं भोजनाय किं किं पच्यते?
तुम्हारी पाकशाला में प्रतिदिन भोजन के लिये क्या-क्या पकाया जाता है?
What is cooked for meals everyday in your kitchen?

84. शाकसूपौदश्वित्कौदनरोटिकादयः।
शाक, दाल, कढ़ी, भात, रोटी आदि।
Vegetables, pulses, *kadhi* (=curry), rice, *roti*, etc.

85. किं वः पायसादिमधुरेषु रुचिर्नास्ति?
क्या आप लोगों की खीर आदि मीठे भोजन में रुचि नहीं है?
Don't you relish sweet dishes like *kheer*, etc.?

86. अस्ति खलु, परन्त्वेतानि कदाचित् कदाचिद् भवन्ति।
है सही, परन्तु ये भोजन कभी-कभी होते हैं।

We surely do; but they are cooked only occasionally.

87. कदाचिच्छष्कुली-श्रीखण्डादयोऽपि भवन्ति न वा?
कभी पूरी-कचौड़ी, श्रीखण्ड आदि भी होते हैं वा नहीं?
Do you ever have *kachori, shrikhand,* etc. also or not?

88. भवन्ति परन्तु यथर्त्तुयोगम्।
होते हैं परन्तु जैसा ऋतु का योग होता है वैसा ही भोजन बनाते हैं।
We do have, but only when in consonance with the season (=weather).

89. सत्यमस्माकमपि भोजनादिकमेवमेव निष्पद्यते।
ठीक है हमारे भी भोजन आदि ऐसे ही बनते हैं।
That is right (=true). We too have the food cooked only likewise.

90. त्वं भोजनं करिष्यसि न वा?
तू भोजन करेगा वा नहीं?
Will you take food or not?

91. अद्य न करोम्यजीर्णतास्ति।
आज नहीं करता अजीर्णता है।
Today I won't. I have (developed) constipation.

92. अधिकभोजनस्येदमेव फलम्।
अधिक भोजन का यही फल है।
Very this is the result of overeating.

93. बुद्धिमता तु यावज्जीर्यते तावदेव भुज्यते।
बुद्धिमान् पुरुष तो जितना पचता है उतना ही खाता है।
The wise eats only as much as he digests.

94. अतिस्वल्पे भुक्ते शरीरबलं ह्रसत्यधिके चातः सर्वदा मिताहारी भवेत्।
बहुत कम और अत्यधिक भोजन करने से शरीर का बल घटता है, इससे सब दिन मिताऽऽहारी होवे।
Overeating as also undereating results into the weakening of the body. So one should always be moderate in eating (=abstemious).

95. योऽन्यथाऽऽहारव्यवहारौ करोति स कथं न दुःखी जायेत?
जो उलट-पलट आहार और व्यवहार करता है वह क्यों न दुःखी होवे?
Why should he who violates this dictum for eats and drinks, and principles of conduct not suffer (=run into trouble)?

96. येन शरीराच्छ्रमो न क्रियते स शरीरसुखं नाप्नोति।
जो शरीर से परिश्रम नहीं करता वह शरीर के सुख को प्राप्त नहीं होता।
One who does not do physical labour does not acquire physical happiness (=comfort).

97. येनात्मना पुरुषार्थो न विधीयते तस्यात्मनो बलमपि न जायते।
जो आत्मा से पुरुषार्थ नहीं करता उसका आत्मा का बल भी नहीं बढ़ता।
One who does not do spiritual labour does not become spiritually strong.

98. तस्मात्सर्वैर्मनुष्यैर्यथाशक्ति सत्क्रिया नित्यं साधनीयाः।
इससे सब मनुष्यों को उचित है यथाशक्ति उत्तम कर्मों की साधना नित्य करनी चाहिये।
So all men must do their best in doing good deeds every day.

99. भो देवदत्त! त्वामहं निमन्त्रये।
हे देवदत्त! मैं तुमको भोजन के लिए निमन्त्रित करता हूं।
Devadatta! I invite you (to meals).

100. मन्येऽहं कदा खल्वागच्छेयम्?
मैं मानता हूं परन्तु किस समय आऊँ?
I accept the invitation. When shall (=should) I come?

101. श्वो द्वितीयप्रहरमध्ये आगन्तासि।
कल डेढ़ पहर दिन चढ़े आना।
Come tomorrow at 10:30 a.m. (=at the time when one and a half *prahar* are past.)

102. आगच्छ भो, आसनमध्यास्व, भवता ममोपरि महती कृपा कृता।
आप आइये, आसन पर बैठिये, आपने मुझ पर बड़ी कृपा की।
Come on. Take (this) seat. You have been very kind to me.

## ५. देशदेशान्तरप्रकरणम्
## 5. Home and Abroad

103. भवानेतान् जानातीमे महाविद्वांसः सन्ति।
आप इनको जानते हैं ये बड़े विद्वान् हैं।
Do you know them? They are great scholars.

104. किन्नामान एते कुत्रत्याः खलु?
इनके क्या-क्या नाम हैं और ये कहां-कहां के रहने वाले हैं?
What are their names? Where do they come from?

105. अयं यज्ञदत्तः काशीनिवासी।
यह यज्ञदत्त, काशी में निवास करता है।
This is Yajnadatta. He lives at Kashi.

106. विष्णुमित्रोऽयं कुरुक्षेत्रवास्तव्यः।
यह विष्णुमित्र कुरुक्षेत्र में वसता है।
This is Vishnumitra. He lives at Kurukshetra.

107. सोमदत्तोऽयं माथुरः।

यह सोमदत्त मथुरा में रहता है।

This is Somadatta. He lives at Mathura.

108. अयं सुशर्मा पर्वतीयः।

यह सुशर्मा पर्वत में रहता है।

This is Susharma. He lives at the hill.

109. आयमाश्वलायनो दाक्षिणात्योऽस्ति।

यह आश्वलायन दक्षिणी है।

This is Ashwalayana. He lives in the south. (=He is a south Indian.)

110. अयं जयदेवः पाश्चात्यो वर्तते।

यह जयदेव पश्चिम देशवासी है।

This is Jayadeva. He lives in the west. (= He is a west Indian.)

111. अयं कुमारभट्टो बाङ्गो विद्यते।

यह कुमारभट्ट बंगाली है।

This is Kumarbhatta. He lives in Bengal. (= He belongs to Bengal.)

112. अयं कापिलेयः पाताले निवसति।

यह कापिलेय पाताल अर्थात् अमेरिका में रहता है।

This is Kapileya. He lives in America.

113. अयं चित्रभानुर्हरिवर्षस्थः।

यह चित्रभानु हिमालय से उत्तर हरिवर्ष अर्थात् यूरोप में रहता है।

This is Chitrabhanu. He lives in Europe (=Harivarsha).

114. इमौ सुकामसुभद्रौ चीननिकायौ।
ये सुकाम और सुभद्र चीन के वासी हैं।
These two are Sukaama and Subhadra. They live in China.

115. अयं सुमित्रो गन्धारस्थायी।
यह सुमित्र गन्धार अर्थात् काबुल कान्धार का रहने वाला है।
This is Sumitra. He lives in Gandhar (=Kabul Kandhar).

116. अयं सुभटो लङ्काजः।
यह सुभट लंका में जन्मा है।
This is Subhata. He was born in Lanka (=is Lanka-born).

117. इमे पंच सुवीरातिबलसुकर्मसुधर्मशतधन्वानो मत्स्याः।
सुवीर, अतिबल, सुकर्मा, सुधर्मा और शतधन्वा ये पांच मारवाड़ के रहने वाले हैं।
These five, *viz.*, Suveer, Atibal, Sukarma, Sudharma and Shatdhanva, live in Marwar.

118. एते मया आमन्त्रिताः स्वस्वस्थानादागताः।
ये सब मेरे बुलाने पर अपने-अपने घर से आये हैं।
They were invited by me (and so) have come

from their respective places.

119. इमे शिवकृष्णगोपालमाधवसुचन्द्रप्रक्रमभूदेवचित्रसेनमहारथा नवात्रत्याः।

शिव, कृष्ण, गोपाल, माधव, सुचन्द्र, प्रक्रम, भूदेव, चित्रसेन और महारथ ये नव इस (मध्य) देश के रहने वाले हैं।

These are : Shiva, Krishna, Gopala, Madhawa, Suchandra, Prakrama, Bhudeva, Chitrasen and Maharatha. These nine belong to this (very) place.

120. अहोभाग्यं मेऽस्ति त्वत्कृपयैतेषामपि समागमो जातः।

मेरा बड़ा भाग्य है कि आपकी कृपा से इन सत्पुरुषों का भी मिलाप हुआ।

I am very fortunate that owing to your grace (=kindness) I have also been able to meet them.

121. अहमपि सभवतः सर्वानेतान्निमन्त्रयितुमिच्छामि।

मैं भी आपके समेत इन सबको निमन्त्रण करना चाहता हूं।

I also want to invite all of them alongwith you.

122. अस्माभिर्भवन्निमन्त्रणमूरीकृतम्।

हमने आपका निमन्त्रण स्वीकार किया।

Your invitation has been accepted by us. (=We have accepted your invitation.)

123. प्रीतोऽस्मि परन्तु भवद्भोजनार्थं किं किं पक्तव्यम्?
आपके निमन्त्रण मानने से मैं बड़ा प्रसन्न हुआ परन्तु आपके भोजन के लिये क्या-क्या पकाया जाए?
I am happy. But what should be cooked for you to eat?

124. यद्यद्भोक्तुमिच्छास्ति तत्तदाज्ञापयन्तु।
जिस-जिस पदार्थ के भोजन की इच्छा हो उस-उस की आज्ञा कीजिये।
Whatever you want to eat, kindly place order to that effect.

125. भवान् देशकालज्ञः कथनेन किं यथायोग्यमेव पक्तव्यम्।
आप देशकाल को जानते हैं कहने से क्या यथायोग्य ही पकाना चाहिये।
You know what suits the place and the time. Where is the use for us to order? What is suitable should be cooked.

126. सत्यमेवमेव करिष्यामि।
ठीक है, ऐसा ही करूंगा।
That is true. I'll do accordingly.

127. उत्तिष्ठत भोजनसमय आगतः पाकः सिद्धो वर्त्तते।
उठिये, भोजन समय आया, पाक तैयार है।
Get up. It is time to dine. (=Time for meals has come.) Food is ready.

128. भो भृत्य! पाद्यमर्घ्यमाचमनीयं जलं देहि।
हे नौकर! इनको पग हाथ मुख धोने के लिये जल दे।
Servant! Give them water for washing feet, hands and face.

129. इदमानीतं गृह्यताम्।
यह लाया, लीजिये।
Here it is (=It stands brought). Take it.

130. भो पाचकाः! सर्वान् पदार्थान् क्रमेण परिवेविष्ट।
हे पाचक लोगो! सब पदार्थों को क्रम से परोसो।
Cooks! Serve all the items in order.

131. भुञ्जीध्वम्।
भोजन कीजिये।
Start eating (= You may eat).

132. भोजनस्य सर्वे पदार्थाः श्रेष्ठा जाता न वा?
भोजन के सब पदार्थ अच्छे हुए हैं वा नहीं?
Are all eats properly cooked (=eatables in decent condition)?

133. अत्युत्तमाः सम्पन्नाः किं कथनीयम्। भवता किञ्चित् पायसं ग्राह्यं यस्येच्छाऽस्ति वा।
क्या कहना है, बड़े उत्तम हुए हैं। आप थोड़ी सी खीर लीजिये वा जिसकी इच्छा हो।
Vow! They are all properly cooked (=in a good condition). Take a bit of *kheer* or any other thing that you want.

134. प्रभूतं भुक्तं तृप्ताः स्मः।
बहुत रुचि से भोजन किया, तृप्त हो गये हैं।
We have taken a lot of it. We feel satiated.

135. तर्ह्युत्तिष्ठत।
तो उठिये।
Then, get up.

136. जलं देहि।
जल दे।
Give (me) water.

137. गृह्यताम्।
लीजिये।
Take it.

138. ताम्बूलादीन्यानीयन्ताम्।
पान बीड़े इलायची आदि लाओ।
Bring betel leaves, etc.

139. इमानि सन्ति गृह्णन्तु।
ये हैं, लीजिये।
Here they are. Take them.

## ६. सभाप्रकरणम्

## 6. A Meeting

140. इदानीं सभायां काचिच्चर्चा विधेया।
अब सभा में कुछ वार्तालाप करना चाहिये।

Now some discussion should be taken up in the meeting.

141. धर्म्मः किं लक्षणोऽस्तीति पृच्छामि?
मैं पूछता हूं कि धर्म्म का क्या लक्षण है?
I ask what the characteristics of dharma (=righteousness) are.

142. वेदप्रतिपाद्यो न्याय्यः पक्षपातरहितो यश्च परोपकार-सत्याऽऽचरणलक्षणः।
वेदोक्त न्यायानुकूल पक्षपातरहित और जो पराया उपकार तथा सत्याचरणयुक्त है उसी को धर्म जानना चाहिये।
It should be (= has the characteristics of being) in consonance with what has been said in the Vedas, what is based on the principles of justice, what is impartial, what is embedded in the welfare of others, and what is based on truthful conduct.

143. ईश्वरः कोऽस्तीति ब्रूहि?
ईश्वर किसको कहते हैं, आप कहिये?
Tell us who God is (= whom we call God).

144. यः सच्चिदानन्दस्वरूपः सत्यगुणकर्मस्वभावः।
जो सच्चिदानन्दस्वरूप और जिसके गुण कर्म स्वभाव सत्य ही हैं वह ईश्वर है।
He who is ever-existent, is conscious, is in full bliss, and also who is of spotless virtues,

actions and nature.

145. मनुष्यैः परस्परं कथं वर्त्तितव्यम्?
मनुष्यों को एक-दूसरे के साथ कैसे-कैसे वर्तना चाहिये?
How should humans behave with one another?

146. धर्मसुशीलतापरोपकारैः सह यथायोग्यम्।
धर्म, श्रेष्ठ स्वभाव और परोपकार के साथ जिनसे जैसा व्यवहार करना योग्य हो वैसा ही उनसे वर्तना चाहिये।
(Their mutual conduct) should be righteous, good-natured, welfare-oriented and as per the entitlement of each other.

## ७. आर्य्यावर्त्तचक्रवर्त्तिराजप्रकरणम्
## 7. The Emperors of Aaryavartta

147. अस्मिन्नार्यावर्त्ते पुरा के के चक्रवर्त्तिराजा अभूवन्?
इस आर्य्यावर्त्त देश में पहिले कौन-कौन चक्रवर्ती राजा हुए हैं?
Which emperors existed in this Aaryavartta territory (=country) during the past (=earlier times)?

148. स्वायम्भुवाद्या युधिष्ठिरपर्यन्ताः।
स्वायंभु से लेकर युधिष्ठिर पर्य्यन्त।
Right from Swayambhu upto Yudhishthir.

149. चक्रवर्त्तिशब्दस्य कः पदार्थः?
चक्रवर्ती पद का क्या अर्थ है?
What is the meaning of the word "chakravarti"?

150. य एकस्मिन् भूगोले स्वकीयामाज्ञां प्रवर्त्तयितुं समर्थाः।
जो एक भूगोल भर में अपनी राजनीति रूप आज्ञा को चलाने में समर्थ हों।
Those who are capable of having their writ run in a large territory.

151. ते कीदृशीमाज्ञां प्राचीचरन्?
वे कैसी आज्ञा का प्रचार करते थे?
What orders would they issue (=circulate)?

152. यया धार्मिकाणां पालनं दुष्टानां च ताडनं भवेत्।
जिससे धर्मियों का पालन और दुष्टों का ताड़न होवे।
(That) which would result into the promotion of the righteous and the chastisement of the wicked.

## ८. राजप्रजालक्षणराजनीत्यनीतिप्रकरणम्

## 8. The Traits of a Ruler and the Subjects; Politics and Mal-politics

153. राजा को भवितुं शक्नोति?
राजा कौन हो सकता है?
Who can be a ruler?

154. यो धार्मिकाणां सभाया अधिपतित्वे योग्यो भवेत्।
जो धर्मात्माओं की सभा का सभापति होने योग्य होवे।
One who is capable of being the head of a group of the righteous.

155. यः प्रजां पीडयित्वा स्वार्थं साधयेत् स राजा भवितुमर्होऽस्ति न वा?
जो प्रजा को दुःख देकर अपना प्रयोजन साधे वह राजा हो सकता है वा नहीं?
Does one who grinds his own axe by tormenting his subjects deserve to be a ruler or not?

156. न हि न हि न हि स तु दस्युः खलु।
नहीं, नहीं, नहीं, वह तो डाकू ही है।
No! No! No! Such a one is surely a robber.

157. या राजद्रोहिणी सा तु न प्रजा किन्तु स्तेनतुल्या मन्तव्या।
जो राजव्यवहार में विरोध करे वह प्रजा तो नहीं किन्तु उसको चोर के समान जानना चाहिये।
The subjects who are traitors do not qualify to be the citizenry. Instead, they should be regarded as thieves.

158. कथंभूता जनाः प्रजा भवितुमर्हाः?
कैसे मनुष्य प्रजा होने को योग्य हैं?
What kind of people qualify to be the citizenry?

159. ये धार्मिकाः सततं राजप्रियकारिणश्च।
जो धर्मात्मा और निरन्तर राजा के प्रियकारी हों।

Those who are righteous and are continually pleasing to the ruler.

160. राजपुरुषैरप्येवमेव प्रजाप्रियकारिभिः सदा भवितव्यम्।
राजसम्बन्धी पुरुषों को भी ऐसे ही प्रजा के प्रिय करने में सदा रहना चाहिये।
Those who are in authority too should always likewise be pleasing to the people.

## ९. शत्रुवशकरणप्रकरणम्
## 9. How to Subdue the Enemy

161. एते शत्रुभिः सह कथं वर्त्तेरन्?
ये लोग शत्रुओं के साथ कैसे वर्त्तें?
How should these people treat the enemies?

162. राजप्रजोत्तमपुरुषैररयः सामदामदण्डभेदैर्वशमानेयाः।
राजा और प्रजा के श्रेष्ठ पुरुषों को योग्य है कि अरियों को (साम) मिलाप (दाम) कुछ देना, (दण्ड) उनको दण्ड, और (भेद) आपस में उनको फोड़ देना उनसे वश में करना चाहिये।
The king and his good people should subdue the enemy by befriending them, or by making gifts to them, or by punishing them, or by dividing them.

163. सदा स्वराज्यप्रजासेनाकोषधर्मविद्यासुशिक्षा वर्धनीयाः।
सब दिन अपना राज्य, प्रजा, सेना, कोष, धर्म्म, विद्या

और श्रेष्ठ शिक्षा बढ़ाते रहना चाहिये।

They should always keep on expanding their territory (=kingdom), subjects, armed forces, exchequer, righteousness, learning and knowledge, and quality education.

164. यथाधर्माविद्यादुष्टशिक्षादस्युचोरादयो न वर्धेरंस्तथा सततमनुष्ठेयम्।

जिस प्रकार से अधर्म, अविद्या, बुरी शिक्षा, डाकू और चोर आदि न बढ़ें वैसा निरन्तर पुरुषार्थ करना चाहिये।

They should continuousuly conduct themselves in such a manner as not to allow unrigtheousness, ill-knowledge, ill-education, docoits, thieves, etc. to grow.

165. धार्मिकैः सह कदापि न योद्धव्यम्।

धर्मात्माओं के साथ कभी लड़ाई न करनी चाहिये।

They should never enter into conflict with the righteous.

166. निर्जिता अपि दुष्टा विनयेन सत्कर्त्तव्याः।

पराजित किये शत्रुओं का भी विनय के साथ मान्य करना चाहिये।

The wicked even after having been defeated should be treated humbly and respectfully.

167. राजप्रजाजनाः प्राणवत् परस्परं सम्पोष्य सुखिनो भवन्तु।

राजा और प्रजा प्राण के तुल्य एक दूसरे की पुष्टि

करके सदा सुखी रहें।

The ruler and the people should remain happy by promoting each other as the other's life-breath.

168. कर्षिते क्षयरोगवदुभे विनश्यतः।

एक दूसरे को निर्बल करने से दमा रोग के समान दोनों निर्बल होकर नष्ट हो जाते हैं।

By weakening each other both get destroyed as if by tuberculosis.

169. सदा ब्रह्मचर्यविज्ञानाभ्यां शरीरात्मबलमेधनीयम्।

सब काल में ब्रह्मचर्य और विद्या से शरीर और आत्मा का बल बढ़ाते रहना चाहिये।

They should always enhance their physical and spiritual strength by observing celebacy, and through knowledge.

170. यथादेशकालं पुरुषार्थेन यथावत् कर्माणि कृत्वा सर्वथा सुखयितव्यम्।

देश काल के अनुसार उद्यम से ठीक ठीक कर्म करके सब प्रकार सुखी रहना चाहिये।

They should remain happy every way by doing their due duties diligently as per needs of the time and place.

## १०. वैश्यव्यवहारप्रकरणम्

## 10. The Conduct of the Businessmen

171. वैश्या: कथं वर्त्तेरन्?

बनिये लोग कैसे वर्त्तें?

How should the businessmen conduct themselves?

172. सर्वा देशभाषा लेखाव्यवहारं च विज्ञाय पशुपालन-क्रयविक्रयादि व्यापार-कुसीदवृद्धिकृषिकर्माणि धर्मेण कुर्युः।

सब देशभाषा और हिसाब को ठीक-ठीक जानकर पशुओं की रक्षा लेनदेन आदि व्यवहार ब्याजवृद्धि और खेती आदि कर्म धर्म के साथ किया करें।

Having learnt all the languages of the country, and accountancy, they should righteously carry out their work pertaining to animal husbandry, sale-purchase, money-lending on interest, and agricultural activities.

## ११. कुसीदग्रहणप्रकरणम्

## 11. Money-lending on Interest

173. यद्येकवारं दद्याद् गृह्णीयाच्च तर्हि कुसीदवृद्ध्या द्वैगुण्ये धर्मोऽधिकेऽधर्म इति वेदितव्यम्।

जो एक बार दें लें तो व्याजवृद्धि सहित मूलधन द्विगुण तक लेने में धर्म और अधिक लेने में अधर्म होता है, ऐसा जानना चाहिये।

It must be <u>noted</u> (=known) that it is righteous if one receives back upto double of the money lended on its being increased with interest, and unrighteous if more than the double amount is received back.

174. प्रतिमासं प्रतिवर्षं वा यदि कुसीदं गृह्णीयाद्यदा समूलं द्विगुणं धनमागच्छेत्तदा मूलमपि त्याज्यम्।

जो महीने-महीने में अथवा वर्ष-वर्ष में व्याज लेता जाय तो भी जब मूलसहित दूना धन आजाय फिर आगे आसामी से कुछ भी न लेना चाहिये।

If interest received monthly or yearly becomes double of the amount lended, even the principal amount should be written off.

## १२. नौकाविमानादिचालनप्रकरणम्

## 12. Piloting Boats, Aricraft, etc.

175. त्वं नौकाश्चालयसि न वा?

तू नावें चलाता है वा नहीं?

Do you row boats or not?

176. चालयामि।

चलाता हूं।

Yes, I do.

177. नदीषु वा समुद्रे?

नदियों में अथवा समुद्र में?

(Do you row boats) in the rivers or the sea?

178. उभयत्र चालयामि।
दोनों में चलाता हूं।
I row in both.

179. कस्यां दिशि कस्मिन्देशे च गच्छन्ति?
किस दिशा और किस देश में जाती हैं?
In which direction and to which country do they sail?

180. सर्वासु दिक्षु पातालदेशपर्य्यन्तम्।
सर्व दिशाओं में पातालदेश अर्थात् अमेरिका देश पर्य्यन्त।
(They sail) in all directions upto America.

181. ताः कीदृश्यः सन्ति केन चलन्ति?
वे नौका कैसी हैं और किससे चलती हैं?
Of what kind are they and on what do they operate?

182. कैवर्त्तवाय्वग्निजलकलावाष्पादिभिः।
मल्लाह, वायु और अग्नि जल कलायन्त्र और भाफ आदि से।
(They are operated) by sailors, on wind power, on power generated by fire, water, steam, etc.

183. याः पुरुषाश्चालयन्ति ता ह्रस्वाः या महत्यस्ता वाय्वादिभिश्चाल्यन्ते ताश्चाश्वतरीश्यामकर्णाश्वाख्याः सन्ति।

जिनको मनुष्य चलाते हैं वे छोटी-छोटी नौका और जो बड़ी होती हैं वे वायु आदिसे चलाई जाती हैं उनके अश्वतरी और श्यामकर्णाश्व आदि नाम हैं।

The ones which men sail are small and the ones which are large are propelled by wind, etc., and their names are Ashwatari and Shyam karnashwa.

184. विमानादिभिरपि सर्वत्र गच्छामश्च।

और विमान आदि से भी सर्वत्र आया जाया करते हैं।

And we go all around (= everywhere) by aircraft, etc. also.

## १३. क्रयविक्रयप्रकरणम्

## 13. Sale and Purchase

185. अस्य किम्मूल्यम्?

इसका क्या मूल्य है?

What is its price?

186. पञ्च रूप्याणि।

पांच रुपये।

Five rupees (=Rupees five).

187. गृहाणेदं वस्त्रं देहि।

लीजिये पांच रुपये, यह वस्त्र दीजिये।

Take it. Give me (this) cloth.

188. अद्यश्वो घृतस्य कोऽर्घः?

आजकल घी का क्या भाव है?

What is the price of *ghee* these days?

189. मुद्रैकया सपादप्रस्थं विक्रीणते?

एक रुपया से सवासेर बेचते हैं।

It sells at one seer and a quarter per one rupee.

190. गुडस्य को भावः?

गुड़ का क्या भाव है?

What is the price of jaggery (=*gud*)?

191. द्वाभ्यामानाभ्यामेकसेटकमात्रं ददति।

दो आने से एक सेर देते हैं।

They give one *seer* for two *annas*.

192. त्वमापणं गच्छ, एलामानय।

तू दुकान पर जा, इलायची ले आ।

Go to the shop. Bring cardamom.

193. आनीता, गृहाण।

ले आया लीजिये।

It has been brought. Take it.

194. कस्य हट्टे दधिदुग्धे अच्छे प्राप्नुतः?

किसकी दुकान पर दूध और दही अच्छे मिलते हैं?

At whose shop are good curd and milk available?

195. धनपालस्य।

धनपाल की।

At Dhanpal's.

196. स सत्येनैव क्रयविक्रयौ करोति।
वह सत्य ही से लेनदेन करता है।
He is honest in carrying out sale and purchase.

197. श्रीपतिर्वणिक्कीदृशोऽस्ति?
श्रीपति बनियां कैसा है?
What type (of man) is Shripati, the business-man?

198. स मिथ्याकारी।
वह झूठा है।
He is fraudulent (=a liar).

199. अस्मिन्संवत्सरे कियांल्लाभो व्ययश्च जातः?
इस वर्ष में कितना लाभ और खर्च हुआ?
How much has been the profit and the expenditure this year?

200. पंच लक्षाणि लाभो लक्षद्वयस्य व्ययश्च।
पांच लाख रुपये लाभ और दो लाख खर्च हुए।
It has been a profit of five lakh and an expenditure of two lakh rupees.

201. मम खल्वस्मिन् वर्षे लक्षत्रयस्य हानिर्जाता।
मेरे तो इस वर्ष में तीन लाख की हानि हो गई।
To me there has been a loss of three lakh this year.

202. कस्तूरी कस्मादानीयते?
कस्तूरी कहां से लाई जाती है?
Wherefrom is brought musk (=*kasturi*)?

203. नेपालात्।
नेपाल से।
From Nepal.

204. बहुमूल्यमाविकं कुत आनयन्ति?
बहुमूल्य दुशाले आदि कहां से लाते हैं?
Wherefrom do they bring costly shawls?

205. कश्मीरात्।
कश्मीर से।
From Kashmir.

## १४. गमनागमनप्रकरणम्
## 14. Movement to and fro

206. कुत्र गच्छसि?
कहां जाता है?
Where are you going?

207. पाटलिपुत्रकम्।
पटने को।
To Patna.

208. कदाऽऽगमिष्यसि?
कब आओगे?

When will you return (=come)?

209. एकमासे।

एक महीने में।

In a month.

210. स क्व गतः?

वह कहां गया?

Where has he gone?

211. शाकमानेतुम्।

शाक लेने को।

To bring vegetables.

## १५. क्षेत्रवपनप्रकरणम्
## 15. Sowing the Fields

212. क्षेत्राणि कर्षन्तु।

खेत जोतो।

Cultivate the fields.

213. बीजान्युप्तानि न वा?

बीज बोये वा नहीं?

Have you sown the seeds or not?

214. उप्तानि।

बो दिये।

Sown.

215. अस्मिन् क्षेत्रे किमुप्तम्?

इस खेत में क्या बोया है?

What have you sown in this field?

216. व्रीहयः।

धान।

Paddy (=Rice)

217. एतस्मिन्?

इस में?

(And) in this one?

218. गोधूमाः।

गेहूं।

Wheat.

219. अस्मिन् किं वपन्ति?

इस खेत में क्या बोते हैं?

What do they sow in this field?

220. तिलमुद्गमाषाढ़कीः।

तिल, मूंग, उड़द और अरहर।

(They sow in this field) sesame, green gram, black gram and red gram.

221. एतस्मिन् किमुप्यते?

इसमें क्या बोया जाता है?

What is sown in this one?

222. यवाः।

जौ।

Barley.

## १६. शस्यच्छेदनप्रकरणम्
## 16. Reaping Harvest

223. संप्रति केदाराः पक्वाः।
इस समय खेत पक गये हैं।
The fields have now ripened.

224. यदि पक्वाः स्युस्तर्हि लुनन्तु।
यदि पक गये हों तो काटो।
If they have ripened then harvest them.

225. इदानीं कृषीवला अन्योऽन्यकेदारान् व्यतिलुनन्ति।
इस समय खेती करने वाले आपस में एक दूसरे का पारापारी खेत काटते हैं।
Now the farmers are reaping the fields of one another by turns.

226. ऐषमे धान्यानि प्रभूतानि जातानि।
इस साल में धान्य बहुत हुए हैं।
This year the food grains have grown in abundance.

227. अत एवैकस्या मुद्राया गोधूमाः खारीप्रमिता अन्यानि तण्डुलादीन्यपि किञ्चिदधिकन्यूनानि लभन्ते।
इसी से एक रुपये के गेहूं एक मन और चावल आदि अन्न भी मन से कुछ अधिक वा न्यून मिलते हैं।
It is for this reason only that one mound of wheat, and more or less than one mound of

rice, etc. are available for one rupee.

## १७. गवादिदोहनपरिमाणप्रकरणम्
## 17. Milking Cows, and their Yield

228. इयं गौर्दुग्धं ददाति न वा?
यह गौ दूध देती है वा नहीं?
Does this cow yield milk or not?

229. ददाति।
देती है।
It does.

230. इयं महिषी कियद्दुग्धं ददाति?
यह भैंस कितना दूध देती है?
How much milk does this buffalo yield?

231. दशप्रस्थम्।
दश सेर।
Ten seers.

232. तवाऽजावयः सन्ति न वा?
तुम्हारे पास भेड़-बकरीया तेरे बकरीयाँ हैं या नहीं?
Do you have goats and sheep, or not?

233. सन्ति।
हैं।
I have.

234. प्रतिदिनं ते कियद्दुग्धं जायते?

नित्य तेरे कितना दूध होता है?

How much of milk do you procure (=get) every day.

235. पञ्च खार्यः।

पांच मन।

Five mounds.

236. नित्यं किंपरिमाणे घृतनवनीते भवतः?

प्रतिदिन कितना घी और मक्खन होता है?

How much of *ghee* and butter do you get daily?

237. सार्द्धद्वादशप्रस्थे।

साढे बारह सेर।

Twelve and a half seers.

238. प्रत्यहं कियद् भुज्यते कियच्च विक्रीयते?

प्रतिदिन कितना खाया जाता है और कितना बिकता है?

How much (of it) is consumed and how much (is) sold daily?

239. सार्धद्विप्रस्थं भुज्यते दशप्रस्थं च विक्रीयते?

अढ़ाई सेर खाया जाता और दश सेर बिकता है।

Two and a half seer (of it) is consumed and ten seer (is) sold.

## १८. क्रयविक्रयार्घप्रकरणम्

## 18. Rate of Sale and Purchase

240. एतद्रुप्यैकेन कियन्मिलति?

ये घी और मक्खन एक रुपया से कितना मिलता है?

How much of it do we get per rupee?

241. प्रस्थत्रयम्।

तीन सेर।

Three seers.

242. तैलस्य कियच्छुल्कम्?

तैल का क्या भाव है?

What is the rate of oil?

243. मुद्राचर्तुथांशेनैकसेटकं प्राप्यते।

चार आने का एक सेर प्राप्त होता है।

One gets one seer for one fourth of a rupee (=four annas).

244. अस्मिन्नगरे कति हट्टास्सन्ति?

इस नगर में कितनी दुकानें हैं?

How many shops are there in this city?

245. पञ्चसहस्राणि।

पांच हज़ार।

Five thousand.

## १९. कुसीदप्रकरणम्
## 19. Charging of Interest

246. शतं मुद्रा देहि।

सौ रुपये दीजिये।

Give me rupees one hundred.

247. ददामि परन्तु कियत् कुसीदं दास्यसि?
देता हूं, परन्तु कितना ब्याज देगा?
I give it to you pay?

248. प्रतिमासं मुद्रार्द्धम्।
प्रति महीने आठ आने।
Half a rupee per month.

## २०. उत्तमर्णाधमर्णप्रकरणम्

## 20. The Creditor and the Debtor

249. भो अधमर्ण! यावद्धनं त्वया पूर्वं गृहीतं तदिदानीं दीयताम्।
हे करजदार! जो धन तुम ने पहिले लिया था वह अब दे।
Hey Loanee! Now return the money that you had taken earlier.

250. मम साम्प्रतं तु दातुं सामर्थ्यं नास्ति।
मेरा इस समय तो देने का सामर्थ्य नहीं है।
I don't have the capacity to repay (=give) it now.

251. कदा दास्यसि?
कब देगा?
When will you return (=give) it?

252. मासद्वयाऽनन्तरम्।

दो महीने के पश्चात्।

Two months hence.(=After two months.)

253\. यद्येतावति समये न दास्यसि चेत्तर्हि राजनियमान्निग्रहीष्यामि।
जो तू इतने समय में न देगा तो राजप्रबन्धक से पकड़ा के लूंगा।

If you don't return it within this period I'll get it back through (enforcing) government laws.

254\. यद्येवं कुर्य्यां तर्हि तथैव ग्रहीतव्यम्।
जो ऐसा करूं तो वैसे ही लेना।

If I do so take it that very way.

## २१. राजप्रजासम्बन्धप्रकरणम्

## 21. The Relationship between the Ruler and the People

255\. भो राजन्! ममायमृणं न ददाति।
हे राजन्! मेरा यह ऋण नहीं देता।

My Lord! This one is not returning the loan amount (given by me).

256\. यदा तेन गृहीतं तदानीन्तनः कश्चित् साक्षी वर्त्तते न वा?
जब उसने लिया था उस समय का कोई साक्षी वर्त्तमान है वा नहीं?

Is there any or no witness who was present

(there) at the time he took the loan.

257. अस्ति।

है।

(Yes), there is one.

258. तर्ह्यानीयताम्।

तो लाओ।

Then, bring him.

259. आनीतोऽयमस्ति।

लाया, यह है।

He has been brought. Here he is.

## २२. साक्षिप्रकरणम्
## 22. The Witness

260. भोः साक्षिन्! त्वमत्र किञ्चिज्जानासि न वा?

है साक्षी! तू इस विषय में कुछ जानता है वा नहीं?

Witness! Do you know anything about this case or not?

261. जानामि।

जानता हूं।

I do.(=I know.)

262. यादृशं जानासि तादृशं सत्यं वद।

जैसा जानता है वैसा सच कह।

Whatever you know speak it out as it is (=truth-

fully).

263. सत्यं वदामि।
सत्य कहता हूँ।
I speak the truth.

264. अस्मादनेन मत्समक्षे सहस्रं मुद्राः गृहीताः।
इससे इसने मेरे सामने सहस्र रुपये लिये थे।
He took one thousand rupees from him <u>in my presence</u> (=before me).

265. भो भृत्य! तं शीघ्रमानय।
औ नौकर! उसको जल्दी ले आ।
Servant! Bring him at once.

266. आनयामि।
लाता हूं।
I am going to bring him.

267. गच्छ राजसभायां राज्ञा त्वमाहूतोऽसि।
चल राजसभा में राजा ने तुझको बुलाया है।
Come on! You have been called by the king (to present yourself) to the Administrative Coucil.

268. चलामि।
चलता हूं।
<u>I accompany you</u>. (=I am going.)

269. भो राजन्नुपस्थितस्सः।
हे राजन्! वह आया है।

Your Highness! <u>He has come</u> (= He is present).

270. त्वयाऽस्य ऋणं किमर्थं न दीयते?

तू इसका ऋण क्यों नहीं देता?

Why are you not repaying his loan?

271. अस्मिन् समये तु मम सामर्थ्यं नास्ति षण्मासानन्तरं दास्यामि।

इस समय तो मेरा सामर्थ्य नहीं है परन्तु छः महीने के पीछे दूंगा।

Now I am <u>not in a position</u> (=not capacitated) (to return it). I'll return it after six months.

272. पुनर्विलम्बं तु न करिष्यसि?

फिर देर तो न करेगा?

You won't delay it further, will you?

273. महाराज! कदापि न करिष्यामि।

महाराज! कभी न करूंगा।

My Lord! Not at all shall I delay it.

274. अच्छ गच्छ धनपाल! यदि सप्तमे मास्ययं न दास्यति तर्ह्येनं निगृह्य दापयिष्यामि।

अच्छा जाओ धनपाल! जो यह सातवें महीने में न देगा तो इसको पकड़ के दिला दूंगा।

Well! Careditor! (You may) go but if he does not return in the seventh month it then I shall get it returned to you after arresting him.

275. अयं मम शतं मुद्रा गृहीत्वाऽधुना न ददाति।
यह मेरे सौ रुपये लेके अब नहीं देता।
Having taken one hundred rupees from me he is not returning (it) now.

276. किं च भो यदयं वदति तत् सत्यं न वा?
क्योंजी जो यह कहता है वह सच है वा नहीं?
Attention, please! Is what he says true or not?

277. मिथ्यैवाऽस्ति।
झूठ ही है।
It is all untrue (=a lie)

278. अहं तु जानाम्यपि नाऽस्य मुद्रा मया कदा स्वीकृताः।
मैं तो जानता भी नहीं कि इसके रुपये मैंने कब लिये थे।
I don't even know when I received (=accepted) money from him.

279. उभयोस्साक्षिणः सन्ति न वा?
दोनों के साक्षी लोग हैं वा नहीं हैं?
Are there witnesses on both the sides, or not?

280. सन्ति।
हैं।
(Yes) there are.

281. कुत्र वर्त्तन्ते?
कहां हैं?

Where are they?

282. इम उपतिष्ठन्ते।
ये खड़े हैं।
Here they are standing.

283. अनेन युष्माकं समक्षे शतं मुद्रा दत्ता न वा?
इसने तुम्हारे सामने सौ रुपये दिये वा नहीं?
Did he give or not one hundred rupees in your presence (=before you)?

284. दत्तास्तु खलु।
निश्चित दिये तो हैं।
Surely, he did. (=He did, for sure.)

285. अनेन शतं मुद्रा गृहीता न वा?
इसने सौ रुपये लिये वा नहीं?
Did he receive or not one hundred rupees?

286. वयं न जानीमः।
हम नहीं जानते।
We don't know.

287. प्राड्विवाकेनोक्तम्।
वकील ने कहा।
The advocate had asked me (to say so).

288. अयमस्य साक्षिणश्च सर्वे मिथ्यावादिनः सन्ति।
यह और इसके साक्षी लोग सब झूठ बोलने वाले हैं।
This man and his witnesses are all liars.

289. कुत इदमेतेषां परस्परं विरुद्धं वचोऽस्ति।
क्योंकि यह इन लोगों का वचन परस्पर विरुद्ध है।
Because this statement of theirs is self-contradictory.

290. यतस्त्वया मिथ्यालपितमत एव तवैकसंवत्सरपर्यन्तं कारागृहे बन्धः क्रियते।
जिससे तूने झूठ बोला इसी कारण तेरा एक वर्ष तक बन्दीघर में बन्धन किया जाता है।
Since you have told a lie, so for a year you are being confined to (=put into) the prison.

291. अयमुत्तमर्णस्त्वदीयान् पदार्थान् गृहीत्वा विक्रीय वा स्वर्णं ग्रहीष्यति।
यह सेठ तेरे पदार्थों को लेकर अथवा बेच के अपने ऋण को ले लेगा।
This creditor will take back his loan amount by getting hold of your belongings, or by selling them.

292. अयं मदीयानि पञ्चशतानि रूप्याणि स्वीकृत्य न ददाति।
यह मेरे पांच सौ रुपये लेकर नहीं देता।
Having taken five hundred rupees from me this is not returning the amount (=it).

293. कुतो न ददाति?
तू क्यों नहीं देता?
Why aren't you returning the amount (=it)?

294. मया नैव गृहीतानि कथं दद्याम्?

मैंने लिये ही नहीं, कैसे दूं?

I didn't take (any money). Why shall I return (=give) it?

295. अयम्मम लेखोऽस्ति, पश्यताम्।

यह मेरा लेख है, देखिये।

This is my handwriting. Have a look at it (=Have a *dekko* at it).

296. आनय।

लाओ।

Present it (=Bring it).

297. गृह्यताम्।

लीजिये।

Take it.

298. अयं लेखो मिथ्या प्रतिभाति।

यह लेख झूठा मालूम पड़ता है।

This writing appears to be fake.

299. तस्मात् त्वं षण्मासान् कारागृहे वस तवेमे साक्षिणश्च द्वौ द्वौ मासौ तत्रैव वसेयुः।

इससे तू छः महीने बन्दीगृह में रह और तेरे ये साक्षी दो–दो महीने के लिये वहीं जायें।

So you stay in the prison for six months. These witnesses of yours will stay right there for two months each.

## २३. सेव्यसेवकप्रकरणम्

## 23. The Master and the Servant

300. भो मंगलदास! सेवार्थं कैङ्कर्यं करिष्यसि?
हे मंगलदास! सेवा के लिये नौकरी करेगा?
Mangal Dass! Will you undertake a job to work as a servant?

301. करिष्यामि।
करूंगा।
(Yes) I will.

302. किं प्रतिमासं मासिकं ग्रहितुमिच्छसि?
प्रति महीने कितना वेतन लेना चाहता है?
How much (of salary) do you want to take per month?

303. पञ्च रूप्याणि।
पांच रुपये।
Five rupees.

304. मयैतावद्दास्यते चेद्यथायोग्या परिचर्या विधेया।
मैं इतना दूंगा जो तुझ से ठीक-ठीक सेवा हो सकेगी।
I shall give you as much. You should, then, do me such service as it ought to be.

305. यदाहं भवन्तं सेविष्ये तदा भवानपि प्रसन्न एव भविष्यति।
जब मैं आपकी सेवा करूंगा तब आप भी प्रसन्न ही होंगे।

When I serve you, you will also feel only (=fully) pleased.

306. मार्जनं कुरु।

झाड़ू दे।

Carry out sweeping.

307. दन्तधावनमानय।

दातून ले आ।

Bring a tooth-brush (=tooth cleaning twig).

308. स्नानार्थं जलमानय।

नहाने के लिए जल ला।

Bring water for bath.

309. उपवस्त्रं देहि।

अंगोछा दे।

Hand (=give) me a towel.

310. आसनं स्थापय।

आसन रख।

Lay the seat (=sitting cloth).

311. पाकं कुरु।

रसोई कर।

Cook the food.

312. हे सूद! त्वयाऽन्नं व्यञ्जनं च सुष्ठु सम्पादनीयम्।

हे रसोइये! तू अन्न और शाक आदि उत्तम बना।

Cook! you should cook the cereals and the vegetable dishes properly.

313. अद्य किं किं कुर्याम्?
आज क्या-क्या करूं?
What (else) shall I do today?

314. पायसमोदकौदनसूपरोटिकाशाकान्युपव्यञ्जनादीनि चापि।
खीर, लड्डू, चावल, दाल, रोटी, शाक और चटनी आदि भी।
(Prepare) *kheer, laddoos,* rice, *rotis,* vegetable dishes and also sauce.

## २४. मिश्रितप्रकरणम्
## 24. Miscellaneous

315. नित्यप्रति किं वेतनं दास्यसि?
नित्यप्रति क्या नौकरी दोगे?
How much of wage (=salary) will you give per day?

316. प्रत्यहं द्वादश पणाः।
प्रतिदिन बारह पैसे।
Twelve paisas per day.

317. वस्त्राणि श्लक्ष्णे पट्टे प्रक्षालनीयानि।
कपड़े चिकने साफ पत्थर की पटिया पर धोने चाहियें।
Clothes should be washed on a smooth and clean slab (of stone).

318. गा वने चारय।

गायें वन में चरा।

Graze the cows in the jungle.

319. पुष्पवाटिकायां गन्तव्यमस्ति।

फूलों की बगीची में जाना है।

We are to go to the flower garden.

320. आम्रफलानि पक्वानि न वा?

आम पके वा नहीं?

Have the mangoes ripened or not?

321. पक्वानि सन्ति।

पके हैं।

They are ripe

322. उपानहावानय।

जूते लाओ।

Bring (a pair of) shoes.

## २५. गमनागमनप्रकरणम्

## 25. Movement to and fro

323. अयं रक्तोष्णीषः क्व गच्छति?

यह लाल पगड़ीवाला कहां जाता है?

Where is this one with a red truban going?

324. स्वगृहम्।

अपने घर को।

To his house.

325. अस्य कदा जन्माऽभूत्?

इसका जन्म कब हुआ था?

When was he born? (=When did his birth take place?)

326. पञ्च संवत्सरा अतीताः।

पांच वर्ष बीते।

Five years ago. (=Five years have passed.)

327. परेद्युर्ग्रामो गन्तव्यः।

कल गांव जाना चाहिये।

You should go to the village tomorrow.

328. गमिष्यामि।

जाऊंगा।

I shall go.

329. भवान् परेद्युः क्व गन्ता?

आप कल कहां जाओगे?

Where will you go tomorrow?

330. अयोध्याम्।

अयोध्या को।

To Ayodḥya.

331. तत्र किं कार्यमस्ति।

वहां क्या काम है?

What takes you there (=What work is to be done there)?

332. मित्रैः सह मेलनं कर्त्तव्यमस्ति।

मित्रों के साथ मिलना है।

I am to meet friends (=A meeting with friends is to be held).

333. कदागतोऽसि?

कब आया है?

When have you come?

334. इदानीमेवाऽऽगच्छामि।

अभी आता हूं।

I have come just now. (=I am coming right now.)

## २६. रोगप्रकरणम्
## 26. Ailments

335. अस्य कीदृशो रोगो वर्त्तते?

इसको किस प्रकार का रोग है?

What ails him? (=What kind of disease is his?)

336. जीर्णज्वरोऽस्ति।

जीर्णज्वर है।

(It is) chronic fever.

337. औषधं देहि।

औषध दे।

Give him medicine.

338. ददामि।
देता हूं।
I am going to give (it to him)

339. परन्तु पथ्यं सदा कर्त्तव्यम्। न हि पथ्येन विना रोगो निवर्त्तते।
परन्तु पथ्य सदा करना चाहिये। पथ्य के विना रोग निवृत्त नहीं होता।
But one must always put oneself on regimen. Without following regimen one does not get cured (=Disease does not disappear in the absence of regimen.)

340. अयं कुपथ्यकारित्वात् सदा रुग्णो वर्त्तते।
यह कुपथ्यकारी होने से सदा रोगी रहता है।
He always suffers form ill-health due to his violating the rules of dietry (=regimen).

341. अस्य पित्तकोपो वर्त्तते।
इसको पित्त का कोप है।
He is suffering from billious disorder.

342. मम कफो वर्धत औषधं देहि।
मेरे को कफ बढ़ता जाता है औषध दीजिए।
I am getting phlegmatic. Give me medicine.

343. निदानं कृत्वा दास्यामि।
रोग की परीक्षा करके दूंगा।
I'll give (medicine) after examining the patient.

344. अस्य महान् कासश्वासोऽस्ति।
इसको बड़ा कासश्वास अर्थात् दमा है।
He is seriously suffering from asthma.

345. मम शरीरे तु वातव्याधिर्वर्त्तते।
मेरे शरीर में तो वातव्याधि है।
I am suffring from wind trouble (=melancholia).

346. संग्रहणी निवृत्ता न वा?
संग्रहणी छूटी वा नहीं?
Has the bowel syndrome (=sprue) disappeared or not?

347. अद्यपर्यन्तं तु न निवृत्ता।
आज तक तो नहीं छूटी।
It hasn't disappeared till today.

348. औषधं संसेव्य पथ्यं करोषि न वा?
औषधि का सेवन करके पथ्य करते हो वा नहीं?
Do you follow regimen after taking medicine, or not?

349. क्रियते परन्तु सुवैद्यो न मिलति कश्चिद्यः सम्यक् परीक्ष्यौषधं दद्यात्।
करता तो हूं परन्तु अच्छा वैद्य कोई नहीं मिलता कि जो अच्छे प्रकार परीक्षा करके औषध देवे।
I do. But I am not getting any good physician

who may give me medicine after examing me properly.

350. तृषाऽस्ति चेज्जलं पिब।
प्यास हो तो जल पी।
If you are thirsty, take water.

## २७. मिश्रितप्रकरणम्
## 27. Miscellaneous

351. इदानीं शीतं निवृत्योष्णसमय आगतः।
अब तो शीत की निवृत्ति होकर गरमी का समय आ गया।
Now winter season is (=having been) over, summer season has set in (=come).

352. हेमन्ते क्व स्थितः?
जाड़े में कहां रहा था?
Where did you stay during winter?

353. बंगेषु।
बंगाल में।
In Bengal.

354. पश्य! मेघोन्नतिं कथं गर्जति विद्योतते च।
देखो! मेघ की बढ़ती, कैसा गर्जता और चमकता है।
Look! The cloud is expanding. How it produces thunder and lightning!

355. अद्य महती वृष्टिर्जाता यया तडागा नद्यश्च पूरिताः।
आज बड़ी वर्षा हुई जिससे तालाब और नदियाँ भर गईं।
Today it has rained heavily which has resulted into the brimming of the pools and the rivers.

356. शृणु, मयूराः सुशब्दयन्ति।
सुनो, मोर अच्छा शब्द करते हैं।
Listen! Peacocks are producing sweet sounds.

357. कस्मात् स्थानादागतः?
किस स्थान से आया?
Wherefrom have you come?

358. जङ्गलात्।
जंगल से।
From the forest.

359. तत्र त्वया कदापि सिंहो दृष्टो न वा?
वहां तूने कभी सिंह देखा था वा नहीं?
Did you ever see or not a lion there?

360. बहुवारं दृष्टः।
कई बार देखा।
I saw one many a time (=many times)

361. नदी पूर्णा वर्त्तते, कथमागतः?
नदी भरी है, कैसे आया?
The river is full (to the brim).How did you

come?

362. नौकया।

नाव से।

By boat.

363. आरोहत हस्तिनं, गच्छेम।

चढ़ो हाथी पर, जायें।

Ride the elephant (and) let us go. (=we should go).

364. अहं तु रथेनागच्छामि।

मैं तो रथ से आता हूँ।

I (shall) come in a chariot.

365. अहमश्वोपरि स्थित्वा गच्छेयं शिविकायां वा?

मैं घोड़े पर चढ़ के जाऊँ अथवा पालकी पर?

Shall I go riding a horse or in a palanquin?

366. पश्य! शारदं नभः, कथं निर्मलं वर्त्तते।

देखो! शरद् ऋतु का आकाश, कैसा निर्मल है।

Look! How clear the sky is during the pre-winter season!

367. चन्द्र उदितो न वा?

चन्द्रमा उगा वा नहीं?

Has the moon risen or not?

368. इदानीन्तु नोदितः खलु।

इस समय तो नहीं उगा है।

It hasn't risen <u>so far</u> (=by now).

369. कीदृश्यस्तारकाः प्रकाशन्ते?

किस प्रकार तारे प्रकाशमान हो रहे हैं।

What kind of stars glow and gleam?

370. सूर्योदयाच्चलन्नागच्छामि।

सूर्योदय से चलता हुआ आता हूँ।

I have come walking down since sun-rise.

371. क्वापि भोजनं कृतन्न वा?

कहीं भोजन किया वा नहीं?

Have you taken food anywhere or not?

372. कृतम्मध्याह्नात् प्राक्।

किया था, दोपहर से पहिले।

<u>I took</u> (= I have taken) in the forenoon.

373. अधुनाऽत्र कर्त्तव्यम्।

अब यहां कीजिये।

Now take <u>it</u> (=food) here.

374. करिष्यामि।

करूंगा।

I shall (take).

## २८. विवाहस्त्रीपुरुषालापप्रकरणम्

## 28. Marriage, Conversation between Wife and Husband

375. त्वया कीदृशो विवाहः कृतः?

तूने किस प्रकार का विवाह किया था?

What kind of marriage have you solemnised?

376. स्वयंवरः।

स्वयंवर।

Of self-choice kind.

377. स्त्र्यनुकूलास्ति न वा?

स्त्री अनुकूल है वा नहीं?

Does your wife suit you or not?

378. सर्वथाऽनुकूलास्ति।

सब प्रकार से अनुकूल है।

She suits me every way.

379. कत्यपत्यानि जातानि सन्ति?

कितने लड़के (=सन्तान) हुए हैं?

How many children have been born?

380. चत्वारः पुत्राः द्वे कन्ये च।

चार पुत्र और दो कन्या।

Four sons and two daughters.

381. स्वामिन्नमस्ते।

स्वामी जी! नमस्ते (अर्थात् आपका सत्कार करती हूँ।)

My lord! Namaste (=I bow to you).

382. नमस्ते प्रिये।

नमस्ते प्रिया।

Namaste, darling!

383. कांचित्सेवामनुज्ञापय।
किसी सेवा की आज्ञा दीजिये।
Please tell me what I can do for you.

384. सर्वथैव सेवसे पुनराज्ञापनस्य कावश्यकताऽस्ति।
सब प्रकार की सेवा करती ही हो, फिर आज्ञा करने की क्या आवश्यकता है।
You have been serving me everyway. Then where is the need of ordering you?

385. अद्य भवान् श्रमं कृतवानत उष्णेन जलेन स्नातव्यम्।
आज आपने श्रम किया है, इस कारण गरम जल से स्नान करना चाहिये।।
You have done (physical) labour today. So you should take a hot bath.

386. गृहाणेदं जलमासनं च।
लीजिये यह जल और आसन।
Take this water and the seat.

387. इदानीं भ्रमणाय गन्तव्यम्।
इस समय घूमने के लिए जाना चाहिये।
Now you should go (out) for a walk.

388. क्व गच्छेव?
कहां चलें?
Where shall we (two) go?

389. उद्यानेषु।

बगीचों में।

To the gardens.

## २९. स्त्रीश्वश्रूश्वशुरादिसेव्यसेवकप्रकरणम्

## 29. Woman in Service of her Parents-in-law and Others

390. हे श्वश्रु! सेवामाज्ञापय, किं कुर्याम्?
हे सास! सेवा की आज्ञा कीजिये, क्या करूं?
Mom! (=Mother-in-law!) Let me know what I can do for you.

391. सुभगे! जलं देहि।
सुभगे! जल दे।
God bless you! Give me water.

392. गृहाणेदमस्ति।
लीजिये यह है।
Take it. Here it is.

393. हे श्वशुर! भवान् किमिच्छत्याज्ञापयतु।
हे श्वसुर! आपकी क्या इच्छा है आज्ञा दीजिए।
Dad! (=Father-in-law!) Let me know what you want.

394. हे वशंवदे! त्वत्सेवया सन्तुष्टोऽस्मि।
हे वशंवदे! तेरी सेवा से संतुष्ट हूं।
Well, submissive lady! I am satisfied with your

tendance (=service).

## ३०. ननन्दृभ्रातृजायावादप्रकरणम्
## Conversation between a Bhabhi and a Nanand

395. हे ननन्दरिहागच्छ वार्त्तालापं कुर्याव।
हे ननन्द! यहां आओ बातचीत करें।
Sister! come here. Let us chat.

396. वद भ्रातृजाये! किमिच्छसि?
कहो भौजाई! क्या इच्छा है?
Sister! Speak out. What do you want?

397. तव पतिः कीदृशोऽस्ति?
तेरा पति कैसा है?
How do you like your husband? (=What kind of man is your husband?)

398. अतीव सुखप्रदो यथा तव।
अत्यन्त सुख देने वाला है, जैसा तेरा।
He is very amiable (=pleasure-giving) like yours.

399. मया त्वीदृशः पतिः सौभाग्येन लब्धोऽस्ति।
मैने तो इस प्रकार का पति अच्छे भाग्य से पाया है।
I have been lucky to have had such a husband.

400. कदाचिदप्रियं तु न करोति?

कभी प्रतिकूल तो नहीं करता?

He never displeases you, does he?

401. कदापि नहि किन्तु सर्वदा प्रीतिं वर्द्धयति।

कभी नहीं किन्तु सब दिन प्रीति बढ़ाता है।

Never at all! Instead, he enhances amicability.

402. पश्याभ्यां बाल्यावस्थायां विवाहः कृतोऽतः सदा दुःखिनौ वर्त्तेते।

देखो, इन दोनों ने बाल्यावस्था में विवाह किया है, इससे सदा दुःखी रहते हैं।

Look! These two were married in their childhood. So they always remain unhappy.

403. यान्यपत्यानि जातानि तान्यपि रुग्णान्यग्रेऽपत्यस्याऽऽशैव नास्ति निर्बलत्वात्।

जो लड़के हुए वे भी रोगी हैं, आगे लड़का होने की आशा ही नहीं है निर्बलता से।

Even the children born (to them) are ailing. Due to weakness there is no hope of any more child (being born).

404. पश्य तव मम च कीदृशानि पुष्टान्यपत्यानि द्विवर्षानन्तरं जायन्ते।

देखो तेरे और मेरे कैसे पुष्ट लड़के दो वर्ष के पीछे होते जाते हैं।

Look! How healthy and strong your and my children are! Each has been born after a gap of

two years.

405. सर्वदा प्रसन्नानि सन्ति वर्द्धन्ते च सुशीलत्वात्।
सब काल में प्रसन्न और बढ़ते जाते हैं सुशीलता से।
They always, remain happy and are growing due to their amicable nature.

406. न ह्यस्मिन् संसारेऽनुकूलस्त्रीपतिजन्यसदृशं सुखं किमपि विद्यते।
इस संसार के अनुकूल स्त्री और पुरुष से होनेवाले सुख के सदृश दूसरा सुख कोई नहीं है।
In this world there is surely no happiness like the happiness born out of the union of compatible wife and husband.

407. इदानीं वृद्धाऽवस्था प्राप्ता, यौवनं गतं, केशाः श्वेता जाताः, प्रतिदिनं बलं ह्रसति च।
इस समय वृद्धावस्था आई, जवानी गई, बाल सफेद हुए और नित्य बल घट रहा है।
Now old age has set in. Youthfulness is over. Hair has turned grey. Energy is depleting by the day.

408. स इदानीं गमनागमनमपि कर्तुमशक्तो जातः।
वह इस समय आने जाने में भी असमर्थ हो गया है।
He has now become incapacitated to go to and fro.

409. बुद्धिविपर्यासत्वाद्विपरीतं भाषते।

बुद्धि विपरीत होने से उलटा बोलता है।

He speaks insensibly due to misconceptions (=dementia).

410. अद्याऽस्य मरणसमय आगत ऊर्ध्वश्वासत्वात्।

आज इसके मरने का समय आया, ऊपर को श्वास के चलने से।

Today the time of his death has come due to his gasping for breath (=deep respiration).

411. सोऽद्य मृतः।

वह आज मर गया।

He has died today.

412. नीयतां श्मशानं वेदमन्त्रैर्घृतादिभिर्दह्यताम्।

ले चलो शमशान को, वेदमन्त्रों सहित घी आदि सुगन्ध से दहन करो।

Take him to the crematorium, (and) burn him with *ghee*, etc. reciting Vedic hymns.

413. शरीरं भस्मीभूतं जातमतस्तृतीयेऽहनि सभस्मास्थिसंचयनं कृत्वा पुनस्तन्निमित्तं शोकादिकं किंचिदपि नैव कार्यम्।

शरीर भस्म हो गया, आज से तीसरे दिन राखसहित हाड़ों को वेदी से अलग करके फिर उसके निमित्त शोकादि कुछ भी न करना चाहिये।

The body has been burnt. So after collecting his bones with the ashes on the third day we should not mourn him at all any more.

414. त्वं मातापित्रोः सेवां न करोष्यतः कृतघ्नी वर्त्तसेऽतो मातापितृसेवा केनापि कदापि नैव त्याज्या।

तू माता-पिता की सेवा नहीं करता इस कारण कृतघ्नी है, इसलिए माता-पिता की सेवा का त्याग किसी को कभी न करना चाहिये।

You don't <u>wait on</u> (=serve) your parents. Therefore, you are ungrateful. So one should never give up tending one's parents.

## ३१. सांयकालकृत्यप्रकरणम्
## 31. Evening Duties

415. इदानीं तु सन्ध्यासमय आगतः सांयसन्ध्यामुपास्य भोजनं कृत्वा भ्रमणं कुरुत।

अब तो सन्ध्या समय आया, सन्ध्योपासन और भोजन करके घूमना-घामना करो।

Now evening has fallen. Go for a walk after carrying out evening prayers and meditation, and after taking meal.

416. अद्य त्वया कियत् कार्यं कृतम्?

आज तूने कितना काम किया?

How much work have you done today?

417. एतावत्कृतमेतावदवशिष्टमस्ति।

इतना किया है और इतना शेष है।

So much has been done, and so much has been

left.

418. अद्य कियांल्लाभो व्ययश्च जातः?

आज कितना लाभ और खर्च हुआ?

How much has been the profit and how much has been the expenditure today?

419. पञ्चशतानि मुद्रा लाभः सार्द्धद्वे शते व्ययश्च।

पांच सौ रूपये लाभ ओर अढ़ाई सौ खर्च हुए।

The profit has been five hundred rupees and the expenditure two hundred and fifty rupees.

420. इदानीं सामगानं क्रियताम्।

इस समय सामवेद का गान कीजिये।

Now recite hymns from the Samaveda.

421. वीणादीनि वादित्राण्यानीयताम्।

वीणादिक बाजे ले आओ।

Bring lyre and other musical instruments.

422. आनीतानि।

लाये।

They have been brought.

423. वाद्यताम्।

बजाओ।

Play them.

424. गीयताम्।

गाओ।

Sing.

425. कस्य रागस्य समयो वर्त्तते?

किस राग का काल है?

For which *raga* is it the suitable time?

426. षड्जस्य।

षड्ज का।

It is for *shadja*.

427. इदानीं तु दशघटिकाप्रमिता रात्र्यागता शयीध्वम्।

इस समय तो दश घड़ी रात बीती, सोइये।

Now it is ten at night. Go to bed.

428. गम्यतां स्वस्थानम्।

जाओ अपने-अपने स्थान को।

Go to your respective places.

429. स्वस्वशय्यायां शयनं कर्त्तव्यम्।

अपने-अपने बिछौने पर सोना चाहिये।

You should sleep on your own beds.

430. सत्यमेवमेवेश्वरकृपया सुखेन रात्रिर्गच्छेत्प्रभातं भवेत्।

सत्य है, ऐसे ही ईश्वर की कृपा से सुखपूर्वक रात बीते और सवेरा होवे।

It is true. By God's grace night should pass comfortably and the dawn should come like this.

# ३२. शरीरावयवप्रकरणम्
# 32. Parts of the Body

431. अस्य शिरः स्थूलं वर्त्तते।
इसका सिर बड़ा है।
His head is big.

432. देवदत्तस्य मूर्द्धकेशाः कृष्णा वर्त्तन्ते।
देवदत्त के सिर में बाल काले हैं।
The hair on Devadatta's head is black.

433. मम तु खलु श्वेता जाताः।
मेरे तो सफेद हो गये।
Mine has turned (=become) grey.

434. तवापि केशा अर्द्धश्वेताः सन्ति।
तेरे भी बाल आधे सफेद हैं।
Half of your hair also is black.

435. अस्य ललाटं सुन्दरमस्ति।
इसका माथा सुन्दर है।
His forehead is beautiful.

436. अयं शिरसा खल्वाटः।
इसके सिर में बाल नहीं हैं।
He is bald-headed.

437. तस्योत्तमौ भ्रुवौ स्तः।
उसकी अच्छी भौंहे हैं।
His eye-brows are beautiful.

438. श्रोत्रेण शृणोषि न वा?

कान से सुनता है वा नहीं?

Can (=Do) you hear with this ear?

439. शृणोमि।

सुनता हूँ।

I can (=do).

440. अनया स्त्रिया कर्णयोः प्रशस्तान्याभूषणानि धृतानि।

इस स्त्री ने कानों में अच्छे सुन्दर गहने पहिने हैं।

This woman has put beautiful ornaments on her ears.

441. किमयं कर्णाभ्यां बधिरोऽस्ति।

क्या यह कानों से बहिरा है?

Is he deaf?

442. बधिरस्तु न, परन्तु श्रवणे ध्यानं न ददाति।

बहिरा तो नहीं है परन्तु सुनने में ध्यान नहीं देता।

He is not deaf but does not pay attention while listening.

443. अयं विशालाक्षः।

यह बड़े नेत्रवाला है।

He is wide-eyed.

444. त्वं चक्षुषा पश्यसि न वा?

तू आंख से देखता है वा नहीं?

Can (=Do) you see with this eye or not?

445. पश्यामि, परन्त्विदानीं मन्ददृष्टिर्जातोऽहमस्मि।
देखता हूं, परन्तु इस समय मन्ददृष्टि अर्थात् थोड़ी दृष्टिवाला हो गया हूँ।
I can (=do) but now I have become weak-sighted.

446. इदानीं ते रक्ते अक्षिणी कथं वर्त्तेते?
इस समय तेरी आंखे लाल क्यों हैं?
Why are your eyes red now?

447. यतोऽहं शयनादुत्थितः।
सो के उठा हूं इस कारण से।
Because I have (just) got up from sleep.

448. स काणो धूर्तोऽस्ति।
वह काना धूर्त्त है।
That one-eyed man is a rogue.

449. द्रष्टव्यमयमन्धः सचक्षुष्कवत् कथं गच्छति?
देखो यह अन्धा आंखवाले के समान कैसे जाता है?
Look! How this blind person is walking like a full-sighted one!

450. तवाऽक्षिणी कदा नष्टे?
तेरी आंखें कब नष्ट हुईं?
When did your eyes go bad?

451. यदाहं पञ्चवर्षोऽभूवम्।
जब मैं पांच वर्ष का हुआ था।

When I was five years old.

452. इदानीम्मन्नेत्रे रोगोऽस्ति स कथं निवर्त्स्यते?
इस समय मेरे नेत्र में रोग है, वह कैसे निवृत्त होगा?
Now one of my eyes is diseased. How will it be cured?

453. अञ्जनाद्यौषधसेवनेन निवर्त्तिष्यते।
अञ्जन आदि औषध के सेवन से निवृत्त होगा।
It will be cured by the use of medicines like collyrium, etc.

454. तस्य नासिकोत्तमास्ति।
उसकी नाक अति सुन्दर है।
He has a beautiful nose.

456. भवानपि शुकनासिकः।
आप भी तोते के सी नाकवाले हैं।
You also have a parrot-like nose.

457. घ्राणेन गन्धं जिघ्रसि न वा?
नाक से गन्ध सूंघता है वा नहीं?
Can (=Do) you smell or not (by nose)?

458. श्लेष्मकफत्वान्मया नासिकया गन्धो न प्रतीयते।
सरदी कफ (जुकाम) होने से मुझको नासिका से गन्ध की प्रतीति नहीं होती।
I cannot smell by nose due to cough and cold.

459. अयं पुरुषः सुकपोलोऽस्ति।

यह पुरुष अच्छे गालवाला है।

This man has beautiful cheeks.

460. अतिस्थूलत्वादस्य नाभिर्गम्भीरा।

बहुत मोटा होने से इसकी नाभि गहरी है।

Due to being very obese, he has a deep navel.

461. त्वमद्य प्रसन्नमुखो दृश्यसे किमत्र कारणम्?

तू आज प्रसन्नमुख दिखाई देता है, इसमें क्या कारण है?

You are looking cheerful today. What makes you so (=what is the reason)?

462. अयं सदैवाह्लादितवदनो विद्यते।

यह सब दिन प्रसन्नमुख बना रहता है।

He always looks (=is always) cheerful.

463. अस्यौष्ठौ श्रेष्ठौ वर्त्तेते।

इसके ओष्ठ बहुत अच्छे हैं।

His lips are very beautiful.

464. अयँल्लम्बोष्ठत्वाद्भयङ्करोऽस्ति।

यह लम्बे ओष्ठवाला होने से भयंकर है।

He is scary due to his long (=hanging) lip.

465. सर्वैर्जिह्वया स्वादो गृह्यते।

सब लोग जीभ से स्वाद लिया करते हैं।

All (people) enjoy taste with the help of (their) tongue.

466. वाचा च सत्यं प्रियं मधुरं सदैव वाच्यम्।
वाणी से सत्य, प्रिय और मधुर सब दिन बोलना चाहिये।
(We should) always speak true, sweet and loveable words.

466. नैव केनचित्खल्वनृतादिकं वक्तव्यम्।
कभी किसी को झूठ नहीं बोलना चाहिये।
One should never tell lies.

467. अयं सुदन् वर्त्तते।
यह अच्छे दांतोवाला है।
He has beautiful teeth (=He is one with beautiful teeth).

468. तव दन्ता दृढा: सन्ति वा चलिता:?
तेरे दांत दृढ़ हैं वा हिल गये हैं?
Are your teeth well-rooted or shaken?

469. मम तु दृढा अस्य त्रुटिता: सन्ति।
मेरे तो दृढ़ हैं अर्थात् निश्चल हैं इसके टूट गये हैं।
Mine are strong but his have fallen (=broken).

470. मन्मुख एकोऽपि दन्तो नास्त्यत: कष्टेन भोजनादिकं करोमि।
मेरे मुख में एक भी दांत नहीं है इससे क्लेश से भोजन करता हूँ।
There is not even a single (=one) tooth in my mouth. So I take food, etc. with difficulty.

471. अस्य श्मश्रूणि लम्बीभूतानि सन्ति।
इसकी मूंछे लम्बी हैं।
He has long moustaches.

472. तव चिबुकस्योपरि केशाः न्यूनाः सन्ति।
तेरी ठोड़ी के ऊपर बाल थोड़े हैं।
There is sparse hair on your chin.

473. त्वया कण्ठ इदं किमर्थं बद्धम्?
तूने गले में यह किसलिये बांधा है?
What for (=why) have you worn this on (=put this on) your neck?

474. अस्योरो विस्तीर्णमस्ति।
इसकी छाती बड़ी है।
He has a broad chest. (=His chest is broad).

475. त्वया हृदये किं लिप्तम्?
तूने छाती में क्या लगाया है?
What have you applied on your chest?

476. इदानीं हेमन्तोऽस्त्यतः कुङ्कुमकस्तूर्यौ लिप्ते।
इस समय हेमन्त ऋतु है, इससे केसर और कस्तूरी लेपन किये हैं।
This is cold (=winter) season. So I have smeared the paste of saffron and musk.

477. तथा हृच्छूलनिवारणायौषधम्।
वैसे हृदयशूल निवारण के लिये औषध।
Also (have I applied) medicine for warding

off heart-ache.

478. माणवकः स्तनाद् दुग्धं पिबति।
लड़का स्तन से दूध पीता है।
The boy is breast-fed.

479. पश्य! देवदत्तोऽयं लम्बोदरो वर्तते।
देख! यह देवदत्त बड़े पेटवाला अर्थात् तोंदवाला है।
Look! This one is Devadatta. He has a bulging (=big) belly.

480. अयन्तु खलु क्षामोदरः।
यह तो छोटे पेटवाला है।
But this one has a small belly.

481. तव पृष्ठे किं लग्नमस्ति?
तेरी पीठ में क्या लगा है?
What is sticking on your back?

482. किं स्कन्धाभ्यां भारं वहसि?
क्या तू कन्धों से भार उठाता है?
Do you carry weight on your shoulders?

483. पश्याऽस्य क्षत्रियस्य बाह्वोर्बलं येन स्वभुजबलप्रतापेन राज्यं वर्द्धितम्।
देख! इस क्षत्रिय का बाहुबल जिसने अपने बाहुबल से राज्य को बढ़ाया है।
Look at the physical strength of this *kshatriya* (=warrior = soldier) who has expanded his territory (=empire = kingdom) with the help of

his physical prowess (=strength).

484. मनुष्येण हस्ताभ्यामुत्तमानि धर्म्यकार्याणि सेव्यानि नैव कदाचिदधर्म्याणि।
मनुष्य को चाहिये कि हाथों से उत्तम धर्मयुक्त कर्म करे न कभी अधर्मयुक्त कर्मों को।
A person should do good and righteous deeds with his hands and never the unrighteous ones.

485. अस्य करपृष्ठे करतले च घृतं लग्नमस्ति।
इसके हाथ की पीठ और तले में घी लगा है।
*Ghee* is sticking on his palm and on the back of (his) palm.

486. मुष्टिबन्धने सत्येकत्राऽङ्गुष्ठ एकत्र चतस्रोऽङ्गुलयो भवन्ति।
मूठी बांधने में एक ओर अंगूठा और एक ओर चार अंगुली होती हैं।
On closing the fist the thumb appears on one side and the four fingers on the other side.

487. शरीरस्य मध्यभागो नाभिः पुरतः पश्चिमतः कटी च कथ्यते।
शरीर के आगे बीच के भाग को नाभि और पीछे के भाग को पीठ कहते हैं।
The middle of the front part of the body is called the navel and the rear part (is called) the back.

488. अयं मल्लः स्थूलोरुः।
यह पहलवान मोटी जंघावाला है।
This wrestler has bulky (=big = heavy) thighs.

489. माणवको जानुभ्यां गच्छति।
लड़का घुटनों के बल से चलता है।
The boy moves (=walks) on (his) knees.

490. अद्यातिगमनेन जङ्घे पीडिते स्तः।
आज बहुत चलने से जांघें दूखती हैं।
Due to excessive walking today (my) calves are aching.

491. अहं पद्भ्यां ह्यो ग्राममगमम्।
मैं पैदल कल गांव को गया था।
I went to the village on foot yesterday.

492. अस्य शरीरे दीर्घाणि लोमानि सन्ति।
इसके शरीर में बड़े-बड़े रोम हैं।
He has long hair on his body.

493. तव शरीरे च न्यूनानि सन्ति।
और तेरे शरीर में थोड़े रोम हैं।
You have sparse hair (=only a few hairs) on your body.

495. अस्य शरीरचर्म श्लक्ष्णं वर्त्तते।
इसके शरीर का चमड़ा चिकना है।
The skin of his body is sleek (=smooth)

495. पश्यास्य नखा आरक्ताः सन्ति।
देख! इसके नख कुछ-कुछ लाल हैं।
Look ! His nails are slightly red.

496. अयं दक्षिणेन हस्तेन भोजनं वामेन जलं पिबति।
यह दाहिने हाथ से भोजन और बायें से जल पीता है।
He takes food with his right hand and (drinks) water with his left hand (=the left hand)

497. इदानीं त्वया श्रमः कृतोऽस्त्यतो धमनी शीघ्रं चलति।
इस समय तूने श्रम किया है, इससे नाड़ी शीघ्र चलती है।
You have done hard work now. So your pulse rate is fast.

498. अधुना तु ममान्तस्त्वग् दह्यतेऽस्थिषु पीडापि वर्त्तते।
इस समय मेरे भीतर की त्वचा जलती और हाड़ों में पीड़ा भी है।
Now the inside of my skin is burning and there is pain in my bones.

## ३३. राजसभाप्रकरणम्
## 33. The Governing Body

499. तिष्ठ देवदत्त! त्वया सह गच्छामि राजसभाम्।
ठहर देवदत्त! तेरे साथ मैं भी राजसभा को चलता हूँ।
Devadatta! Hold (=Wait). I'll go with you to

the governing council.

500. सभाशब्दस्य कः पदार्थः?
सभा शब्द का क्या अर्थ है?
What is meant by the word "sabha'?

501. या सत्यासत्यनिर्णयाय प्रकाशयुक्ता वर्त्तते।
जो सच झूठ का निर्णय करने के लिए प्रकाश से सहित हो।
The body which is enlightened to decide what is true and what is false.

502. तत्र कति सभासदः सन्ति?
वहां कितने सभासद् हैं?
How many members are there in it?

503. सहस्रम्।
हजार।
One thousand.

504. या मम ग्रामे सभास्ति तत्र खलु पञ्चशतानि सभासदः सन्ति।
जो मेरे गांव में सभा है उसमें तो पांच सौ सभासद् हैं।
The council which is there in my village has five hundred members.

505. इदानीं सभायां कस्य विषयस्योपरि विचारो विधातव्यः?
इस समय सभा में किस विषय पर विचार करना चाहिये?

What topic should be discussed (=thought over) in the meeting?

506. युद्धस्य।
युद्ध अर्थात् लड़ाई का।
War.

507. तेन सह युद्धं कर्त्तव्यं न वा?
उसके साथ युद्ध करना चाहिये वा नहीं?
Should we enter into war with him or not?

508. यदि कर्त्तव्यं तर्हि कथम्?
यदि करना चाहिये तो कैसे?
If we should, then how?

509. यदि स धर्मात्मा तदा तु न कर्त्तव्यम्।
यदि वह धर्मात्मा हो तब तो उससे युद्ध करना योग्य नहीं।
If he is righteous, then we should not.

510. पापिष्ठश्चेत्तर्हि तेन सह योद्धव्यमेव।
और जो पापी हो तो उससे युद्ध करना ही चाहिये।
If he is a sinner then we nust wage war on him.

511. सोऽन्यायेन प्रजां भृशं पीडयत्यतो महापापिष्ठः।
वह अन्याय से प्रजा को निरन्तर पीड़ा देता है, इस कारण से वह बड़ा पापी है।
He is unjustly tormenting people a lot. So he is a great sinner.

512. एवं चेत्तर्हि शस्त्रास्त्रप्रक्षेपयुद्धकुशला बलिष्ठा कोश-धान्यादिसामग्रीसहिता सेना युद्धाय प्रेषणीया।
यदि ऐसा है तो शस्त्र-अस्त्र चलाने में और युद्ध में कुशल बड़ी लड़नेवाली, खजाना और अन्नादि सामग्री सहित सेना युद्ध के लिये भेजनी चाहिये।
If it is so, the armed forces which are strong and efficient in the use of war weapons should be equipped with the wherewithal and sent for waging war.

513. सत्यमेवात्र वयं सर्वे सम्मतिं दद्मः।
सच ही है, इसमें हम सब लोग सम्मति देते हैं।
It is rightly (=truly) said, and we give our concurrence to this (proposal).

514. इदानीं कस्यां दिशि कैः सह युद्धं प्रवर्त्तते?
इस समय किस दिशा में किन के साथ युद्ध हो रहा है?
With whom and in which direction is the war going on now?

515. पश्चिमायां दिशि यवनैः सह हरिवर्षस्थानाम्।
पश्चिम दिशा में मुसलमानों के साथ हरिवर्षस्थ अर्थात् यूरोपियन अंग्रेज लोगों का।
It is taking place between the Muslims and the Europeans in the west.

516. पराजिता अपि यवना अद्याप्युपद्रवं न त्यजन्ति।

हारे हुए मुसलमान लोग अब भी उपद्रव नहीं छोड़ते।
Though defeated, Muslims are not giving up hostilities even today.

517. अयं खलु पशुपक्षिणामपि स्वभावोऽस्ति यदा कश्चित्तद्गृहादिकं ग्रहीतुमिच्छेत् तदा यथाशक्ति युध्यन्त एव।
यह तो पशु-पक्षियों का भी स्वभाव है कि जब कोई उनके घर आदि को छीन लेने की इच्छा करता है तब यथाशक्ति युद्ध करते अर्थात् लड़ते ही हैं।
This is the nature of even birds and animals that whenever somebody thinks of snatching their living places (=houses), etc. they fight to their utmost capacity.

## ३४. ग्राम्यपशुप्रकरणम्
## 34. Rural Animals

518. भो गोपाल! गा वने चारय।
हे अहीर! गौओं को वन में चरा।
Gopal! Graze the cows in the forest.

519. तत्र या धेनवस्ताभ्योऽर्द्धं दुग्धं त्वया दुग्ध्वा स्वामिभ्यो देयमर्द्धं च वत्सेभ्यः पाययितव्यम्।
वहां जो नई व्याई गौयें हैं उनसे आधा दूध तूने दुहकर मालिक को देना और आधा बछड़ों को पिलाना चाहिये।

The cows which have newly calved should be milked by you. Half of their milk should be given to their owner and half should be left for the calves to drink.

520. एतौ वृषभौ रथे योक्तुं योग्यौ स्तः, इमौ हले खलु।
ये दोनों बैल गाड़ी में वा रथ में जोतने के योग्य हैं और ये दोनों हल ही में।

These two oxen are fit to be yoked in the chariot and these two in (=for pulling) the plough.

521. पश्येमाः स्थूला महिष्यो वने चरन्ति।
देखिये, ये मोटी भैंसे वन में चरती हैं।

Look! these hefty she-buffaloes are grazing in the forest.

522. आगच्छ भो! द्रष्टव्यम्महिषाणां युद्धं परस्परं कीदृशं भवति।
आओ जी, देखने योग्य है भैंसों का युद्ध किस प्रकार आपस में हो रहा है।

Come along, please. Worth watching is how the he-buffaloes fight among themselves.

523. अस्य राज्ञो बहव उत्तमा अश्वाः सन्ति।
इस राजा के बहुत से उत्तम घोड़े हैं।

This king has many good horses.

524. किमियं राज्ञ सतुरङ्गा सेना गच्छति?
क्या यह राजा की घोड़ों सहित सेना जा रही है।

Is it the king's <u>cavalry</u> (=army using horses) going?

525. श्रोतव्यं हरयः कीदृशं ह्रेषन्ते।
सुनिये, घोड़े किस प्रकार हिनहिनाते हैं।
Listen, how the horses are neighing!

526. यथा हस्तिनो स्थूलाः सन्ति तथा हस्तिन्योऽपि।
जैसे हाथी मोटे होते हैं वैसे हथिनी भी हैं।
The she-elephants are also as hefty as the he-elephants.

527. नागास्समं गच्छन्ति।
हाथी बराबर चाल से चलते हैं।
The elephants are keeping pace amongst themselves. OR
The elephants are keeping a steady pace.

528. शृणु, करिणः कीदृशं बृंहन्ति!
सुन, हाथी कैसे चिंहारते हैं!
Listen, how the elephants are trumpeting!

529. पश्येमे गजोपरि स्थित्वा गच्छन्ति।
देख, ये हाथी पर बैठ के जाते हैं।
Look! They are going riding the elephants.

530. अस्य राज्ञः कतीभास्सन्ति?
इस राजा के कितने हाथी हैं?
How many elephants does this king have?

531. पञ्च सहस्राणि।

पांच हजार।

Five thousand.

532. रात्रौ श्वानो बुक्कन्ति।

रात में कुत्ते भूंसते हैं।

Dogs bark at night.

533. प्रातः कुक्कुटाः संप्रवदन्ति।

सवेरे मुरगे बोलते हैं।

The cocks crow in the morning.

534. मार्जारो मूषकानत्ति।

बिल्ला मूसों को खाता है।

The he-cat eats the rats / mice.

535. कुलालस्य गर्दभा अतिस्थूलाः सन्ति।

कुम्हार के गदहे अत्यन्त मोटे हैं।

The donkeys of the potter are very hefty.

536. शृणु, लम्बकर्णा रासभा रासन्ते।

सुन, लम्बे कानों वाले गदहे बोलते हैं।

Listen ! Long-eared donkeys are braying.

537. ग्राम्यशूकराः पुरीषं भक्षयित्वा भूमिं शुन्धन्ति।

गांव में सूअर मैला खाके भूमि को शुद्ध करते हैं।

The village pigs eat the faeces (=excrement) and thus cleanse the ground.

538. उष्ट्रा भारं वहन्ति।

ऊंट बोझा ढोते हैं।

The camels carry load.

539. अजाविपालोऽजा अवीर्दोग्धि।
गड़रिया बकरी और भेड़ों को दुहता है।
The shepherd milks the goats and the sheep.

540. पशवोऽपुर्नद्यां जलम्।
पशुओं ने नदी में जल पिया था।
The animals drank water from the river.

541. रक्तमुखो वानरोऽतिदुष्टो भवति कृष्णमुखस्तु श्रेष्ठः खलु।
लाल मुख का बन्दर बड़ा दुष्ट और काले मुंह का लंगूर तो अच्छा होता है।
A monkey with a red mouth is very wicked but the one with a black mouth is very good.

542. वानरी मृतकमपि बालकं न त्यजति।
बन्दरी मरे हुए बच्चे को भी नहीं छोड़ती।
The she-monkey doesn't desert even her dead child.

543. गोपालेन गावो दुग्धाः पयो न वा?
ग्वाले ने गौओं से दूध दुहा वा नहीं?
Has the cowhand (=cow boy) milked the cows or not?

544. कपिलाया गोर्मधुरं पयो भवति।
कपिला (पीली) गाय का दूध मीठा होता है।

The milk of a yellow cow is sweet.

545. अयं वृषभः कियता मूल्येन क्रीतः?
यह बैल कितने मोल से खरीदा है।
For how much did you purchase this bull?

546. शतेन रूप्यैः।
सौ रुपयों से।
For one hundred rupees.

547. कतिभिः पणैः प्रस्थं पयो मिलति?
कितने पैसों से सेर दूध मिलता है?
How much does one seer of milk cost? (= For how many paisas do we get one seer of milk?)

548. द्वाभ्यां पणाभ्याम्।
दो पैसों से।
Two paisas (= for two paisas)

549. पश्य देवदत्त! वानराः कथमुत्प्लवन्ते?
देख देवदत्त! बन्दर कैसे कूदते हैं?
Devadatta ! Look, how the monkeys are jumping about!

550. अयं महाहनुत्वाद्धनुमान्वर्त्तते।
यह बन्दर बड़ी ठोडीवाला होने से हनुमान् है।
This monkey is Hanuman because of his long chin.

# ३५. ग्रामस्थपक्षिप्रकरणम्
# 35. Rural Birds

551. एताभ्यां चटकाभ्यां प्रासादे नीडं रचितम्।
इन दो चिड़ियों ने अटारी पर घोंसला बनाया है।
These (two) sparrows have <u>woven</u> (=built)a nest on the palace.

552. अत्राण्डानि धृतानि।
यहां अण्डे धरे हैं।
Eggs are lying here.

553. इदानीं तु चाटकैरा अपि जाताः।
अब तो इनके बच्चे भी हो गये हैं।
Now even children have been born (to them).

554. पश्य, विष्णुमित्र! कुक्कुटयोर्युद्धम्।
देख, विष्णुमित्र! मुरगों की लड़ाई।
Vishnumitra, look! Cock fight (is going on). OR Vishnumitra, watch the cockfight.

555. कुक्कुटी स्वान्यण्डानि सेवते।
मुरगी अपने अण्डों को सेवती है।
The hen is hatching its eggs.

556. पश्य, शुकानां समूहं यो विरुवन्नुड्डीयते।
देख, तोतों के झुण्ड को जो चहचहाता हुआ उड़ रहा है।
Look at the group of parrots who are flying warbling .

557. रात्रौ काका न वाश्यन्ते।
रात में कौवे नहीं बोलते हैं।
The crows don't caw at night

558. अरे भृत्योड्डाय ध्वांक्षमनेन पातव्यजलपात्रे चञ्चुं निक्षिप्य जलं विनाशितम्।
अरे नौकर! कौवे को उड़ादे, इसने पीने के जल के बर्तन में चोंच डालकर जल दूषित कर दिया।
Servant! Scare away the crow. It has sullied the water in the pot carrying potable water by putting its beak into it.

559. वायसेन बालकहस्ताद्रोटिका हृता।
कौवे ने लड़के के हाथ से रोटी ले ली।
The crow has snatched the piece of bread (=*roti*) from the hand of the child.

560. पश्य, कीदृशं काकोलूकिकं युद्धं प्रवर्त्तते।
देख, किस प्रकार की कौवे और उल्लुओं की लड़ाई हो रही है।
Look ! How the fight between crows and owls is going on.

561. अनेन शुकहंसतित्तिरिकपोताः पालिताः।
इसने तोता, हंस, तीतर और कबूतर पाले हैं।
He has brought up a parrot, a swan, a partridge and a pigeon.

# ३६. वन्यपशुप्रकरणम्
# 36. Wild Animals

562. वने रात्रौ सिंहा गर्जन्ति।
वन में रात के समय सिंह गर्जते हैं।
Tigers roar in the jungle at night.

563. शार्दूलं दृष्ट्वा सिंहा निलीयन्ते।
शार्दूल को देखकर सिंह छिप जाते हैं।
Tigers hide themselves on seeing a lion.

564. ह्यः सिंहेन गौर्हता।
कल सिंह ने गौ को मार डाला।
Yesterday a tiger killed a cow.

565. परश्वो विक्रमवर्मणा सिंहो हतः।
परसों विक्रमवर्मा ने सिंह मारा।
Day before yesterday Vikram Verma killed a tiger.

566. द्रष्टव्यं हस्तिसिंहयो रणम्।
देख हाथी और सिंह की लड़ाई।
Look! A fight between an elephant and a tiger (is going on) OR
See the fight between an elephant and a tiger.

567. जङ्गले हस्तियूथाः परिभ्रमन्ति।
जंगल में हाथियों के झुण्ड घूमते हैं।
Herds of elephants move about in the jungle.

568. इदानीमेव वृकेण मृगो गृहीतः।
अभी भेड़िये ने हिरन पकड़ लिया।
Just now a wolf caught hold of a deer.

569. अयं कुक्कुरो बलवाननेन सिंहेन सहाप्याजिः कृता।
यह कुत्ता बड़ा बलवान् है, इसने सिंह के साथ लड़ाई की।
This dog is very strong. It has fought against a tiger.

570. पश्य सिंहवराहयोः संग्रामम्।
देख, सिंह और शूकर का युद्ध।
See the fight between a tiger and a wild boar.

571. शूकरा इक्षुक्षेत्राणि भक्षयित्वा विनाशयन्ति।
शूकर ईख के खेतों को खाकर नष्ट कर देते हैं।
The boars graze in the sugar cane fields and destroy them.

572. पश्य वेगेन धावतो मृगान्।
देख, वेग से दौड़ते हुए हिरनों को।
Look at the fast running deer.

573. अयं रुरुर्वृषभवत्स्थूलोऽस्ति।
यह कस्तूरी मृग बैल के समान मोटा है।
This muskdeer is as hefty as a bull.

574. यो निलीयोत्प्लुत्य धावति स शशस्त्वया दृष्टो न वा?
जो छुपकर कूद के दौड़ता है वह खरगोश तूने देखा है वा नहीं?

Have you seen the rabbit which hides and then runs away galloping?

575. बहून् दृष्टवान्।
बहुतों को देखा है।
I have seen many.

576. कदाचिद्भालवोऽपि दृष्टा न वा?
कभी भालुओं को भी देखा है वा नहीं?
Have you ever seen the bears also or not?

577. एकदार्च्छेन साकं मम युद्धं जातम्।
एक दिन रीछ के साथ मेरी लड़ाई भी हुई थी।
<u>One day I got into a fight with a bear.</u> (=One day a fight took place between me and a bear.)

578. रात्रौ शृगालाः रुदन्ति।
रात्रि में सियार रोते हैं।
The jackals weep at night.

579. कदाचित्खड्गोऽपि दृष्टो न वा?
कभी गैंडा भी देखा वा नहीं?
Have you ever seen a rhinoceros or not?

580. य आरण्या महिषा बलवन्तो भवन्ति तान्कदाचिद् दृष्टवान्न वा?
जो वनैले भैंसे बलवान् होते हैं उनको कभी देखा वा नहीं?
Have you ever seen or not the wild buffaloes which are very strong?

## ३७. वनस्थपक्षिप्रकरणम्
## 37. Wild Birds

581. कदाचित् सारसावप्युड्डीयमानौ क्रीडन्तौ महाशब्दं कुरुतः।
कभी सारस पक्षी भी उड़ते और क्रीड़ा करते हुए बड़े शब्द करते हैं।
Sometimes cranes fly playfully and make a great noise.

582. श्येनेनातिवेगेन वर्तिका हता।
बाज ने बड़े वेग से बटेर मारी।
A hawk killed a quail very fiercely.

583. शृणु, तित्तिरयः कीदृशं मधुरं नदन्ति!
सुन, तित्तिर किस प्रकार मधुर बोलते हैं!
Listen, how sweet sounds the partridges are producing!

584. वसन्ते पिकाः प्रियं कूजन्ति।
वसन्त ऋतु में कोयल प्रिय शब्द करती हैं।
Cuckoos produce lovable sounds during spring season.

585. काककोकिलवद् दुर्वचाः सुवाक् च मनुष्यो भवति।
कौवे और कोयल के सदृश दुष्ट और अच्छा बोलनेवाला मनुष्य होता है।
The bitter-tongued and sweet-tongued people are like a crow and a cuckoo (respectively).

586. अयं देवदत्तो हंसगतिं गच्छति।
यह देवदत्त हंस के समान चलता है।
This is Devadatta walking like a swan.

587. पश्येमे मयूरा नृत्यन्ति।
देख, ये मोर नाचते हैं।
Look! These peacocks are dancing.

588. उलूका रात्रौ विचरन्ति।
उल्लू रात को विचरते हैं।
Owls move about during night.

589. पश्य, बकः सरस्सु पाखण्डिजनवन्मत्स्यान् हन्तुं कथं ध्यायति?
देख, बगुला तालाबों में पाखण्डी मनुष्य के तुल्य मछली मारने को किस प्रकार ध्यान कर रहा है?
Look, how the heron in the tanks like a deceitful person is thinking of killing the fish!

590. बलाका अप्येवमेव जलजन्तून् घ्नन्ति।
बगुला भी इसी प्रकार जलजन्तुओं को मारती हैं।
The herons also kill the acquatic beings the same way.

591. पश्य, कथञ्चकोरा धावन्ति?
देख, किस प्रकार चकोर दौड़ते हैं?
Look, how the red-legged partridges are running!

592. येऽत्यूर्ध्वमाकाशे गत्वा मांसाय निपतन्ति ते गृधास्त्वया दृष्टा न वा?

जो बहुत ऊपर आकाश में जाकर मांस के लिये गिरते हैं वे गीध तूने देखे हैं वा नहीं?

Have you seen those vultures or not which go very high in the sky and fall down for (grabbing) carrion (=meat)?

593. मेनका मनुष्यवद्वदन्ति।

मैना मनुष्य के समान बोलती हैं।

Starlings speak like humans.

594. चिल्लिका माणवकहस्ताद्रोटिकां छित्त्वोड्डीयते।

चील लड़के के हाथ से रोटी छीनकर उड़ जाती है।

The kite flies away after snatching the piece of bread from the hand of the boy.

## ३८. तिर्यग्जन्तुप्रकरणम्
## 38. Crooked Creatures

595. सर्पाः शीघ्रं सर्पन्ति।

सर्प जल्दी सरकते हैं।

The snakes crawl fast.

596. अयं कृष्णः फणी महाविषधारी।

यह काला सांप बड़ा विषवाला है।

This black serpent is very poisonous.

597. भवता कदाचिदजगरोऽपि दृष्टो न वा?

आपने कभी अजगर भी देखा है या नहीं?

Have you ever seen a python or not?

598. पश्याहिनकुलस्य संग्रामो वर्त्तते।

देख, सांप और नेवले का युद्ध हो रहा है।

Look! A fight is going on between a snake and a mongoose.

599. स वृश्चिकेन दष्टो रोदिति।

वह बिच्छू से काटा हुआ रोता है।

Stung by a scorpion he is weeping

600. इयं गोधा स्थूलास्ति।

यह गोह (एक प्रकार की छिपकली) मोटी है।

This guana is hefty.

601. मूषका बिले शेरते।

मूसे बिल में सोते हैं।

The mice sleep in the hole.

602. मक्षिकां भक्षयित्वा वमनं प्रजायते।

मक्खी खाकर वमन हो जाता है।

Eating flies results into vomiting.

603. अत्र वासः कर्त्तव्यो निर्मक्षिकं वर्त्तते।

यहां वास करना चाहिये, मक्खी एक भी नहीं है।

This place being free from flies we should stay here.

604. मधुमक्षिकादशनेन शोथः प्रजायते।

मधुमक्खियों के काटने से सूजन हो जाती है।

Bee-biting results into swelling.

605. भ्रमरा गुञ्जन्तः पुष्पेभ्यो गन्धं गृह्णन्ति।
भौरे गूंजते हुए, फूलों से सुगन्धि ग्रहण करते हैं।
The <u>humming</u> (=buzzing) black bees extract fragrance from flowers.

## ३९. जलजन्तुप्रकरणम्
## 39. Aquatic Beings

606. तिमिङ्गला मत्स्याः समुद्रे भवन्ति।
तिमिङ्गल मछलियां समुद्र में होती हैं।
The whales are (found) in the sea.

607. रोहूखड्गसिंहतुण्डराजीवलोचनाश्च कुण्डपुष्करिणीनदीतडागसमुद्रेषु च निवसन्ति। रोहू, खड्ग, सिंहतुण्ड और राजीवलोचन इन नामों की मछलियां पुखरिया, नदी, तालाब और समुद्र में वास करती हैं।
The fishes named Rohu, Khadga, Singhtunda and Rajeewalochan live in pools, ponds, rivers and seas.

608. मकरः पशूनपि गृहीत्वा निगलति।
मगर पशुओं को भी पकड़कर निगल जाता है।
A crocodile catches hold of animals and swallows them.

609. नक्रा ग्राहा अपि महान्तो भवन्ति।

नाके घरियार भी बड़े-बड़े होते हैं।

Alligators are also large-sized.

610. कूर्माः स्वाङ्गानि संकोच्य प्रसारयन्ति।

कछुए अपने अंगों को समेट कर फैलाते हैं।

The tortoises expand the parts of their bodies after contracting them.

611. वर्षासु मण्डूकाः शब्दयन्ति।

वर्षाकाल में मेंढक शब्द करते हैं।

The frogs crock during the rains (=rainy season).

612. जलमनुष्या अप्सु निमज्य तट आसते।

जल के मनुष्य पानी में डूबकर तीर पर बैठते हैं।

Water-men dive into the water and come to settle on the bank.

## ४०. वृक्षवनस्पतिप्रकरणम्

## 40. Trees & Vegetation

613. पिप्पलाः फलिता न वा?

पीपल फले हैं वा नहीं?

Have the *peepal* trees fruited (=fructified) or not?

614. इमे वटाः सुच्छायास्सन्ति।

ये बड़ अच्छी छायावाले हैं।

These banyan trees are very shady.

615. पश्येम उद्धुम्बराः सफला वर्त्तन्ते।
देख, ये गूलर फलयुक्त हो रहे हैं।
Look! These gular trees (=wild fig trees) are fructiflying.

616. इमे बिल्वाः स्थूलफलास्सन्ति।
ये बेल बड़े-बड़े फलवाले हैं।
These wood apple trees bear heavy fruit.

617. ममोद्याने आम्राः पुष्पिताः फलिताः सन्ति।
मेरे बगीचे में आम फूले-फले हैं।
The mango trees in my garden have flowered and fruited.

618. इदानीं पक्वफला अपि वर्त्तन्ते।
इस समय में पके हुए फल भी हैं।
Now ripe fruits are also there.

619. अस्याम्रवृक्षस्य मधुराणि रसवन्ति च फलानि भवन्ति।
इस आम के मीठे पेड के और रसीले फल होते हैं।
The fruits of this mango tree are sweet and juicy.

620. तस्य त्वम्लानि भवन्ति।
उसके तो खट्टे होते हैं।
The fruits of that tree are sour.

621. पनसस्य महान्ति फलानि भवन्ति।
कटहल के बड़े-बड़े फल होते हैं।

The fruits of the jackfruit tree are big.

622. शिंशपायाः काष्ठानि दृढानि सन्ति।
सीसम की लकड़ी दृढ़ होती है।
The *seesom* wood is hard.

623. शालस्य दीर्घाणि च।
और साखू की लकड़ी लम्बी होती है।
And the *saakhu* wood is long.

624. अस्य बर्बुरस्य कण्टकास्तीक्ष्णा भवन्ति।
इस बबूल के कांटे तीखी अणीवाले होते हैं।
The thorns of this tree are sharply pointed.

625. बदरीणां तु मधुराम्लानि फलानि कण्टकाश्च कुटिला भवन्ति।
बेरियों के तो मीठे खट्टे फल और इनके कांटे टेढ़े होते हैं।
The fruits of *ber* trees (=jujube trees) are sweet and sour. And their thorns are crooked.

626. कटुको निम्बो ज्वरं निहन्ति।
कड़ुआ नीम ज्वर का नाश कर देता है।
The bitter margosa (=*neem*) eradicates fever.

627. मातुलुङ्गकफलरसं सूपे निक्षिप्य भोक्तव्यम्।
नींबू का रस दाल में डालकर खाना चाहिए।
The lemon juice becomes worth eating when added to cooked pulses.

628. मम वाटिकायां दाडिमफलान्युत्तमानि जायन्ते।

मेरे बगीचे में अनार बहुत अच्छे होते हैं।

The pomegranates that grow in my orchard are excellent (=of high quality).

629. नागरङ्गफलान्यानय।

नारंगी के फलों को ला।

Bring oranges.

630. वसन्ते पलाशाः पुष्पन्ति।

वसन्तु ऋतु में ढाक (पलाश) फूलते हैं।

The *dhak* trees flower during the spring.

631. उष्ट्राः शमीवृक्षपत्रफलानि भुञ्जते।

ऊंट शमी अर्थात् खींजड़ (छोंकर) वृक्ष के पत्ते और फलों को खाते हैं।

Camels eat the leaves and the fruit of the *shamee* trees.

## ४१. औषधप्रकरणम्

## 41. Medicines

632. कदलीफलानि पक्वानि न वा?

केले के फल पके या नहीं?

Are the bananas ripe or not?

633. तण्डुलादयस्तु वैश्यप्रकरणे लिखितास्तत्र द्रष्टव्याः।

चावल आदि तो बनियों के प्रकरण में लिखे हैं वहां देख लेना।

Rice, etc. have been mentioned in the topic relating to businessmen. Refer to that.

634. विषनिवारणायाऽपामार्गमानय।
विष दूर करने के लिये चिंचिड़ा ला।
Bring the medicinal plant named *apamarga* for destroying the effect of poison.

635. निर्गुण्ड्याः पत्राण्यानेयानि।
निर्गुण्डी के पत्ते लाने चाहिये।
Bring the leaves of the medicinal plant called *nirgundi*.

636. लज्जावत्याः किं जायते।
लज्जावन्ती का क्या होता है?
To what use is *Lajjawanti* put?

637. गुडूची ज्वरं निवारयति।
गिलोय ज्वर को शान्त करती है।
The *guduchi* plant soothes away fever.

638. शंखावलीं दुग्धे पाचयित्वा पिबेत्।
शंखावली को दूध में पका के पियें।
*Shankhawali* should be taken after boiling it in milk.

639. यथर्त्तुयोगं हरीतकी सेविता सर्वान् रोगान्निवरयति।
जिस प्रकार से प्रत्येक ऋतु में हरड़े का सेवन करना योग्य है वैसे सेवी हुई हरड़ सब रोगों को छुड़ा देती है।

*Haritaki* taken in the compatible season extirpates all diseases.

640. शुण्ठीमरीचपिप्पलीभिः कफवातरोगौ निहन्तव्यौ।
सोंठ, मिर्च और पीपल से कफ और वात रोगों का नाश करना चाहिये।
Phlegmatic and wind diseases should be extirpated with (the intake of) dry ginger, chilly and *peepal*.

641. योऽश्वगन्धां दुग्धे पाचयित्वा पिबति स पुष्टो जायते।
जो असगन्ध को दूध में पका कर पीता है वह पुष्ट होता है।
One who takes *ashwagandha* plant after boiling it in milk becomes strong.

642. इमानि कन्दानि भोक्तुमर्हाणि वर्त्तन्ते।
ये कन्द खाने के योग्य हैं।
These roots are worth-eating.

643. एतेषां तु शाकमपि श्रेष्ठं जायते।
इन कन्दों का तो शाक भी अच्छा होता है।
The vegetable obtained from them is very good.

644. अस्यां वाटिकायां गुल्मलताः प्रशंसनीयाः सन्ति।
इस बगीचे में गुच्छा और लताप्रतान प्रशंसा के योग्य अर्थात् अच्छे हैं।
The bunching and spreading creepers in this flower-garden are laudable.

## ४२. आत्मीयप्रकरणम्

## 42. Personal Details

645. तव ज्येष्ठो बन्धुर्भगिनी च कास्ति?
तेरा बड़ा भाई और बहिन कौन है?
Who is your elder brother, and who is your sister?

646. देवदत्तस्सुशीला च।
देवदत्त और सुशीला।
Devadatta and Susheela.

647. भो बन्धो! अहं पाठाय व्रजामि।
हे भाई! मैं पढ़ने को जाता हूँ।
Brother! I am going for studies.

648. गच्छ प्रिय! पूर्णां विद्यां कृत्वागन्तव्यम्।
जा प्यारे! पूरी विद्या करके आना।
(You may) go, dear. Come after completing the full educational course.

649. भवतः कन्या अद्यश्वः किं पठन्ति?
आपकी बेटियां आजकल क्या पढ़ती हैं?
What are your daughters studying these days?

650. वर्णोच्चारणशिक्षादिकं दर्शनशास्त्राणि चाधीत्येदानीं धर्मपाकशिल्पगणितविद्या अधीयते। वर्णोच्चारणशिक्षादिक तथा न्याय आदि शास्त्र पढ़कर अब धर्म, पाक शिल्प और गणितविद्या पढ़ती है।

Having completed her studies in Phoneties, etc. and in (various) treatises of philosophy she now is studying religion, cookery, architecture and mathematics.

651. भवज्ज्येष्ठया भगिन्या किं किमधीतमिदानीञ्च तया किं क्रियते?

आपकी बड़ी बहिन ने क्या-क्या पढ़ा है और अब वह क्या करती है?

What has your elder sister studied and what is she doing these days?

652. वर्णज्ञानमारभ्य वेदपर्यन्ताः सर्वा विद्या विदित्वेदानीं बालिकाः पाठयति।

अक्षराभ्यास से लेकर वेद तक सब पूरी विद्या पढ़के अब कन्याओं को पढ़ाया करती है।

Having acquired all learning from alphabetic studies right upto the Vedas she is now teaching girls.

653. तया विवाहः कृतो न वा?

उसने विवाह किया या नहीं?

Has she married or not?

654. इदानीं तु न कृतः परन्तु वरं परीक्ष्य स्वयंवरं कर्तुमिच्छति।

अभी तो नहीं किया, परन्तु वर की परीक्षा करके स्वयंवर करने की इच्छा करती है।

So far she has not. But she wants to go for self-

choice in marriage after assessing the proposed (=proposing) match.

655. यदा कश्चित् स्वतुल्यः पुरुषो मिलिष्यति तदा विवाहं करिष्यति।

जब कोई अपने सदृश पुरुष मिलेगा तब विवाह करेगी।

She will go for marriage whenever she gets a man with qualities matching hers.

656. तव मित्रैरधीतं न वा?

तेरे मित्रों ने पढ़ा है या नहीं?

Are your friends educated or not? (=Have your friends received education or not?)

657. सर्व एव विद्वांसो वर्त्तन्ते यथाऽहं तथैव तेऽपि, समानस्वभावेषु मैत्र्यास्सम्भवात्।

सब ही विद्वान् हैं, जैसा मैं हूँ वैसे वे भी हैं, क्योंकि तुल्य स्वभाव वालों में मित्रता का सम्भव है।

All of them are scholars. They are just like me since friendship sustains only among people with matching nature.

658. तव पितृव्यः किं करोति?

तेरा चाचा क्या करता है?

What does your uncle do?

659. राज्यव्यवस्थाम्।

राज्य का कारवार।

[He does (=is doing)] a government job.

660. इमे किं तव मातुलादयः?
ये क्या तेरे मामा आदि हैं?
Are they your maternal uncles *et al*.

661. बाढमयं मम मातुल इयं पितृष्वसेयं मातृष्वसेयं गुरुपत्न्ययं च गुरुः।
ठीक। यह मेरा मामा, यह पिता की बहिन बूआ, यह माता की बहिन मौसी, यह गुरु की स्त्री और यह गुरु है।
That's right. This is my maternal uncle, this is my <u>*bua*</u> (= father's sister), this is my <u>*mausi*</u> (=mother's sister), this is my <u>*gurumata*</u> (=teacher's wife) and this is my teacher.

662. इदानीमेते कस्मै प्रयोजनायैकत्र मिलिताः?
इस समय ये सब किसलिये मिलकर इकट्ठे हुए हैं?
For what purpose have they assembled now?

663. मया सत्कारायाऽऽहूताः सन्त आगताः।
मैंने सत्कार के अर्थ बुलाये हैं सो ये सब आये हैं।
I have invited them to greet them. So they have come.

664. इमे मे मम पितृश्वश्रूश्वसुरश्यालादयः सन्ति।
ये सब मेरे पिता की सासं-ससुर और साले आदि हैं।
These are my father's father-in-law, mother-in-law, brother-in-law *et al.*

665. इमे मम मित्रस्य स्त्रीभगिनीदुहितृजामातरः सन्ति।

ये मेरे मित्र की स्त्री, बहिन, लड़की और जमाई हैं।

These are my friend's wife, sister, daughter and son-in-law.

666. इमौ मम पितुः श्यालदौहित्रौ स्तः।

ये मेरे मामा और भानजे हैं।

These two are my maternal uncle and nephew (=sister's son).

## ४३. सामन्तप्रकरणम्
## 43. Feudal Lords

667. त्वद्गृहनिकटे के के निवसन्ति?

तेरे घर के पास कौन-कौन रहते हैं?

Who live near your house (=who are your neighbours)?

668. ब्राह्मणक्षत्रियविट्शूद्राः।

ब्राह्मण, क्षत्रिय, वैश्य और शूद्र लोग।

*Brhamans, kshatriyas, vaishyas* and *shudras*.

669. इमे राजसमीपनिवासिनः।

ये राजा के समीप रहने वाले हैं।

They are all living in the neighbourhood of the king.

# ४४. कारुप्रकरणम्

# 44. An Artisan

670. भोस्तक्षंस्त्वया नौविमानरथशकटहलादीनि निर्माय तत्र प्रशस्तानि कलाकीलशलाकादीनि संयोज्य दातव्यानि।

हे बढ़ई! तुझ को नावें, विमान, रथ, गाड़ी और हल आदि रच के उन में अत्युत्तम कलायन्त्र, कील, कांटे आदि संयुक्त करके देने चाहियें।

Carpenter ! You should make and give us boats, aircraft, chariots, carts, ploughs, etc. after fixing in them high-quality mechanism, nails, steel-pins, etc.

671. इदं काष्ठं छित्वा पर्य्यङ्कं रचय।

इस लकड़ी को काट के पलंग बना।

Cut this piece of wood and make a bedstead.

672. अस्मात्कपाटाः सम्पादनीयाः।

इससे किवाड़ों को बना।

Make door-posts from it.

673. इमं वृक्षं किमर्थं छिनत्सि?

इस वृक्ष को किसलिये काटता है?

Why are you felling (=cutting) this tree?

674. मुसलोलूखलयोर्निर्माणाय।

मूसल और ऊखली बनाने के लिये।

To make a pestle and a mortar.

# ४५. अयस्कारप्रकरणम्

# 45. An Iron-smith

675. भो अयस्कार! त्वयाऽस्यायसो बाणासिशक्तितोमर-मुद्गरशतघ्नीभुशुण्ड्य निर्मातव्याः।
हे लोहकार ! तुझको इस लोहे के बाण, तलवार, बरछी, तोमर, मुद्गर, बंदूक और तोप बना देने चाहियें।
Blacksmith! You should make arrows, swords, spears, javelins, maces, guns and cannons from this iron.

676. एतस्य क्षुरादीनि च।
इसके छुरे आदि।
And (make) daggers, etc. from this iron.

677. इमौ कलशकटाहौ त्वया विक्रीयेते न वा?
ये घड़ा और कड़ाही तुम बेचते हो वा नहीं?
Do you (want to) sell this water-pot and this cauldron, or not?

678. विक्रीणामि।
बेचता हूँ।
I do (=want to).

679. एतान् कीलकण्टकान् किमर्थं रचयसि?
इन कील कांटो को किसलिये बनाता है?
Why do you make these nails and iron-pins?

680. विक्रयणाय।

बेचने के लिये।

For marketing (=selling) them.

## ४६. सुवर्णकारप्रकरणम्

## 46. A Goldsmith

681. त्वया सुवर्णादिकं नैव चौर्यम्।
तू सोना आदि मत चुराना।
You should not steal gold, etc.

682. आभूषणान्युत्तमानि निर्मिमीष्व।
गहने अच्छे सुन्दर बना।
Make excellent ornaments.

683. अस्य हारस्य कियन्मूल्यमस्ति?
इस हार का कितना मोल है?
What is the price of this necklace?

684. पञ्च सहस्राणि राजत्यो मुद्राः।
पांच हजार रुपये।
Five thousand silver coins.

685. इमौ कुण्डलौ त्वया श्रेष्ठौ रचितौ वलयौ तु न प्रशस्तौ।
ये कुंडल तूने अच्छे बनाये परन्तु कड़े तो बिगाड़ दिये।
These two ear-rings made by you are excellent, but these two bracelets are not to our liking (=laudable / likeable.)

686. एतान्यङ्गुलीयकानि मुक्ताप्रवालहीरकनीलमणिजटितानि

सम्पादय।
ये अंगूठियां मोती, मूंगा, हीरा और नीलमणि से जड़ी हुई बना।
Make these rings studded with pearl, coral,diamond and sapphire.

687. एतेनालङ्कारा अत्युत्तमा रच्यन्ते।
इससे गहने बहुत अच्छे बनाये जाते हैं।
This way very beautiful ornaments are made.
OR
He makes very beautiful ornaments.

688. नासिकाभूषणं सद्यो निष्पादय।
नथुनी शीघ्र बना दे।
Make a nose-ring promptly (=expeditiously).

689. इदं मुकुटं केन रचितम्?
यह मुकुट किसने बनाया?
Who has made this crown?

690. शिवप्रतापेन।
शिवप्रताप ने।
Shivapratap (has made it).

691. अस्य सुवर्णस्य कटककङ्गणनूपुरान् निर्माय सद्यो देहि।
इस सोने के कड़ा, कंकणी वा कंगना और पजेब बनाके शीघ्र दे।
Make a bangle, a wristband, a bracelet and a pair of anklets from this gold.

## ४७. कुलालप्रकरणम्

## 47. A Potter

692. भो कुलाल ! कुम्भशरावमृद्गवकान्निर्मिमीष्व, घटं देह्यनेन जलमानेष्यामि।

अरे कुम्भार ! घड़ा, सरवा और मट्टी की गौओं को बना और घड़ा दे, जल लाऊँगा।

Potter ! Make a pitcher, an earthen cup and earthen cows. Give me the pitcher in which I will bring water.

## ४८. तन्तुवायप्रकरणम्

## 48. A Weaver

693. भो तन्तुवाय ! अस्य सूत्रस्य पाटशाट्युष्णीषाणि वय।

ओ कोरी ! इस सूत के पटका, साड़ी और पगड़ियां बुन।

Weaver ! Weave a sash, a *saree* and turbans from this yarn.

## ४९. सूचीकारप्रकरणम्

## 49. A Tailor

694. भो ! सूच्या किं सीव्यसि?

ओ ! सूई से क्या सीता है?

What are you stitching (=sewing) with the needle?

695. शिरोऽङ्गरक्षणाधोवस्त्राणि सीव्यामि।
टोपी, अंगरखा और पाजामा सीता हूँ।
I stitch (= sew) caps, jackets and trousers.

## ५०. मिश्रितप्रकरणम्
## 50. A Miscellaneous

696. भो कारुक! कटं वय।
अरे चटाई वाले! चटाई बुन।
Artisan ! Knit (=Make) a mat.

697. इमे व्याधा मृगादीन्पशून् घ्नन्ति।
ये बहेलिये हरिन आदि पशुओं को मारते हैं।
These hunters kill animals like deer, etc.

698. किराता वने निवसन्ति।
किरात अर्थात् भील लोग वन में रहते हैं।
Bheels (=Tribals) live in the forest.

699. सकमलानि सरांसि कुत्र सन्ति?
कमलवाले तालाब कहां हैं?
Where are the tanks having lotus flowers.

700. इमे तडागा ग्रीष्मे शुष्यन्ति।
ये सब तालाब गरमी में सूख जाते हैं।
These tanks go dry during summer season.

701. कूपाज्जलमानय।
.तू कुएं से जल ला।

Bring water from the well.

702. अद्य वाप्यां स्नातव्यम्।
आज बावड़ी में नहाना चाहिये।
Today you should take bath in the water tank.

703. रञ्जकेन शतघ्नीभुशुण्ड्यादयश्चलन्ति।
बारूद से बंदूक और तोपें आदि चलती हैं।
The guns and cannons work on gun powder.

704. अयं कम्बलस्त्वया कस्माद् गृहीतः कस्मै प्रयोजनाय च?
यह कम्बल तूने किससे लिया और किस प्रयोजन के लिये?
From whom have you got this blanket and for what purpose?

705. कश्मीराच्छीतनिवारणाय।
कश्मीर से, जाड़ा छुड़ाने के लिये।
From Kashmir, for warding off cold.

706. पश्य माणवकाः क्रीडन्ति।
देख, लड़के खेलते हैं।
Look, the boys are playing.

707. अस्मिन् गृहे विस्तराणि श्रेष्ठानि सन्ति।
इस घर में बिछौने अच्छे हैं।
The bed clothes in this house are very fine.

708. इमे चोराः पलायन्तो।
ये चोर लोग भागे जाते हैं।

These thieves are fleeing away ( = flee away).

709. तत्र दस्युभिरागत्य सर्वं धनं हृतम्।
वहां डाकू लोगों ने आकर सब धन हर लिया।
The dacoits came there and grabbed all the money

710. त्रेतान्ते युधिष्ठिरादयो बभूवुः।
त्रेता के अन्त में युधिष्ठिरादि हुए थे।
Yudhishthira *etc all* were born at the end of *treta* era.

711. मम पादे कण्टकः प्रविष्ट एनमुद्धर।
मेरे पैर में कांटा घुस गया, इसको निकाल।
A thorn has stuck into my foot. Pull it out.

712. केशान् संवेशय।
बालों को सम्भाल।
Do (=Comb) your hair.

713. भो नापित! नखाञ्छिन्धि मुण्डय शिरः श्मश्रूणि च।
ओ नाऊ! नखों को काट, शिर मूंड और मूछ भी काट डाल।
Barber ! Pare my nails, shave my head and trim my moustache also.

714. अयं शिल्पी प्रासादमत्युत्तमं रचयति।
यह राज अटारी बहुत अच्छी बनाता है।
This artisan (= architect) constructs very good houses (= palaces = mansions).

715. अयं कोटपालो न्यायकारी वर्तते।
यह कोतवाल न्यायकारी है।
This police officer is very just (= justice loving)

716. स तु धर्मात्मा नैवास्त्यन्यायकारित्वात्।
वह कोतवाल तो धर्मात्मा नहीं है, अन्यायकारी होने से।
This police officer being unjust is not righteous.

717. एते राजमन्त्रिणः कुत्र गच्छन्ति?
ये राजा के मन्त्री लोग कहां जाते हैं?
Where are these ministers of the king going?

718. राजसभां न्यायकरणाय यान्ति।
राजसभा को न्याय करने के लिये।
They are going to the governing council for delivering justice.

719. भोस्ताम्बूलानि देहि।
ओ! पान दे।
Well ! Give me a betel leaves.

720. ददामि।
देता हूँ।
I (am going to) give it.

721. भोस्तैलकार! तिलेभ्यस्तैलं निःसार्य देहि।
अरे तेली! तिलों से तैल निकालकर दे।
Oilman ! Extract oil from sesame seeds and give it (to me).

722. दास्यामि।
दूंगा।
I shall give.

723. अरे रजक! वस्त्राणि प्रक्षाल्य सद्यो देयानि।
अरे धोबी! कपड़ों को धोकर शीघ्र देना।
Washerman ! Wash the clothes and give (them back) expeditiously.

724. कपाटान् बधान।
किवाड़ों को बन्द कर।
Close the doors.

725. इदानीं प्रातःकालो जातः कपाटानुद्घाटय।
इस समय सवेरा हुआ किवाड़ों को खोल।
Now it is morning. Open the doors.

726. सर्वे युद्धाय सज्जा भवन्तु।
सब सिपाही लोग लड़ाई के लिये तैयार हों।
All should get ready for the war.

727. अर्थिप्रत्यर्थिनौ राजगृहे युध्येते।
मुद्दई और मुद्दायले कचहरी में लड़ते हैं।
The plaintiff and the respondent are fighting in the court.

728. किमियं गोधूमान् पिनष्टि?
क्या यह गेहुओं को पीसंती है?
Does she grind wheat?

729. कुतोऽद्य दुर्गे शतघ्न्यश्चलन्ति?
क्यों आज किले में तोपें चलती हैं?
Why are cannons firing in the fort?

730. तेन भुशुण्ड्या सिंहो हतः।
उसने बन्दूक से बाघ को मारा।
He killed a tiger with a gun.

731. तेनाऽसिना तस्य शिरष्छिन्नम्।
उसने तलवार से उसका सिर काट डाला।
He cut his head with a sword.

732. अञ्जनं किमर्थमनक्षि?
अञ्जन किसलिये आंजता है?
Why do you apply <u>collyrium</u> (= eye powder)?

733. दृष्टिवृद्धये।
दृष्टि बढ़ाने के लिये।
For increasing eye-sight.

734. उपानहौ धृत्वा क्व गच्छसि?
जूते पहिन के कहां जाता है?
Where are you going after wearing shoes?

735. जङ्गलम्।
जंगल को।
To the forest.

736. किं स्थाल्यामोदनं पचसि सूपं वा?
क्या बटुवे में भात पकाता है, वा दाल?

Do you cook rice or pulses in this earthen pot?

737. कटाहे शाकं पच।
कड़ाही में तरकारी पका।
Cook the vegetable dish in the cauldron.

738. विरुद्धं वदिष्यसि चेत्तर्हि ते दन्तांस्त्रोटयिष्यामि।
विरुद्ध बोलेगा तो तेरे दांत तोड़ डालूंगा।
If you speak against me, I will break your teeth.

739. तव पितुस्तु सामर्थ्यं नाभूत् तव तु का कथा।
तेरे बाप का तो सामर्थ्य न हुआ, तेरी तो क्या बात है।
Even your father didn't have the courage (= the capacity), not to speak of you.

740. येन प्रजा पाल्यते स कथन्न स्वर्गं गच्छेत्?
जिसने प्रजा का पालन किया, वह स्वर्ग को क्यों न जाये?
Why should he not go to heaven who nurtures and nourishes his people (= subjects)?

741. यो राज्यं पीडयेत्स कथन्न नरके पतेत्?
जो राज्य को पीड़ा देवे वह क्यों नरक में न पड़े?
Why should he not go to hell who torments and tortures his subjects (=people)?

742. येनेश्वर उपास्यते तस्य विज्ञानं कुतो न वर्द्धेत?
जो ईश्वर की उपासना करे, उसका विज्ञान क्यों न बढ़े?

Why should his knowledge not increase who approaches God with a prayer?

743. यः परोपकारी स सततं कथन्न सुखी भवेत्?
जो परोपकारी है वह सर्वदा सुखी क्यों न होवे?
Why should one who is a philanthropist (=works for the welfare of others) not remain happy continuously?

744. अस्यां मञ्जूषायां किमस्ति?
इस संदूक में क्या है?
What is there in this box?

745. वस्त्रधने।
कपड़ा और धन।
Clothes and money.

746. इदानीमपि कुम्भ्यां धान्यं वर्त्तते न वा?
अब कोठी में अन्न है या नहीं?
Are there grains or not in this granary now?

747. स्वल्पमस्ति।
थोड़ा सा है।
Only a small quantity is there.

748. त्वमालसी तिष्ठसि कुतो नोद्योगं करोषि?
तू आलसी रहता है, उद्योग क्यों नहीं करता?
You are lazy. Why don't you work hard?

749. उभयत्र प्रकाशाय देहल्यां दीपं निधेहि।
दोनों ओर उजियाला होने के लिये दरवाजे पर दिया

धर।

Put the lamp on the threshold for light on both the sides.

750. तेन चर्मासिभ्यां शतेन सह युद्धं कृतम्।

उसने ढाल और तलवार से सौ पुरुषों के साथ युद्ध किया।

He fought against one hundred people with a sword and a shield.

751. अतिथीन् सेवसे न वा?

अतिथियों की सेवा करता है या नहीं?

Do you <u>wait on</u> ( = serve) the guests or not?

752. प्रेक्षासमाजं मा गच्छ।

कभी मेले तमाशे में मत जा।

Never <u>visit</u> (= attend) a fair pageant.

753. द्यूतसमाह्वयौ कदापि नैव सेवनीयौ।

जो अप्राणी को दाव पर धर के खेलना वह द्यूत, और प्राणी को दाव पर धर के खेलना वह समाह्वय कहाता है उसको कभी न सेवना चाहिये।

One should never indulge in gambling of either type -- one laying wager on humans, and the other on non-humans and non-living things.

754. यो मद्यपोऽस्ति तस्य बुद्धिः कथं न ह्रसेत्?

जो मद्य पीनेवाला है उसकी बुद्धि क्यों न न्यून होवे?

Why should the sagacity of the drunkard not

weaken?

755. यो व्यभिचरेत्स रुग्णः कथं न जायेत?
जो व्यभिचार करे वह रोगी क्यों न होवे?
Why should a debauchee not fall ill?

756. यो जितेन्द्रियः स सर्वं कर्तुं कुतो न शक्नुयात्?
जो जितेन्द्रिय है वह सब उत्तम काम क्यों न कर सके?
Why should a chaste person not be able to do all (good) work.

757. योगाभ्यासः कृतो येन ज्ञानदीप्तिर्भवेन्नरः।
जिसने योग का अभ्यास किया है वह ज्ञान प्रकाश से युक्त होवे।
May the man who has carried out practice as per yoga dicta (= dictums) be enlightened with knowledge!

758. वस्त्रपूतं जलं पेयं मनःपूतं समाचरेत्।
वस्त्र से पवित्र किया जल पीना चाहिये और मन से शुद्ध जाना हुआ काम करना चाहिये।
One should drink (only) that water which has been filtered through cloth, and should do only that work which has been accepted by one's conscience (=mind).

759. स भ्रान्तौ कदापि न पतेत्?
वह भ्रमजाल में कभी नहीं गिरे।
May he never become a victim of delusion!

760. अयं वाचालोऽस्त्यतो बरबरायते।
यह बहुत बोलने वाला है इसी कारण बड़बड़ाता है।
He is very talkative and so murmurs and mutters.

761. भूमितले किमस्ति?
भूमि के नीचे क्या है?
What is there under the earth?

762. मनुष्यादयः।
मनुष्य आदि।
Humans, etc.

763. यः पद्भ्यां भ्रमति सोऽरोगो जायते।
जो पैरों से चलता है वह रोग रहित होता है।
One who moves about on foot remains free from disease.

764. व्यजनेन वायुं कुरु।
पंखे से वायु (हवा) कर।
Move air by waving a fan (= with a fan.)

765. किं घर्मादागतोऽसि यत् स्वेदो जातोऽस्ति।
क्या घाम से आया है जो पसीना हो रहा है?
Are you coming from scorching sunshine that you are sweating?

766. स्वस्थे शरीरे नित्यं स्नात्वा मितं भोक्तव्यम्।
अच्छे शरीर में रोज नहा के थोड़ा खाना चाहिये।
When in a healthy body, take a light meal after

taking bath.

767. जलवायू शुद्धौ सेवनीयौ।

पवित्र जल और वायु का सेवन करना चाहिये।

One should take purified (= pure) water and breathe in fresh air.

768. सर्वर्तुके शुद्धे गृहे निवसनीयम्।

जो सब ऋतुओं में सुख देनेवाला शुद्ध घर हो उसी में रहना चाहिये।

One should live in a clean and comfortable house in all seasons.

769. नैव केनचिन्मलिनानि वस्त्राणि धार्याणि।

किसी को भी मैले कपड़े पहिनने न चाहियें।

No one should put on unclean clothes.

770. तव का चिकीर्षास्ति?

तेरी क्या करने की इच्छा है?

What do you want to do?

771. गृहं गत्वा भोक्तुम्।

घर जाके खाने की।

(I want) to go home and take food.

772. त्वं सक्तुं भुङ्क्षे न वा?

तू सत्तू खाता है या नहीं?

Do you eat *sattu* or not?

773. घृतदुग्धमिष्टैः सहाऽद्मि।

घी, दूध और मीठे के साथ खाता हूँ।

I eat it in combination with *ghee*, milk and sweets.

774. त्वयाम्रफलानि चूषितानि न वा?
तूने आम चूसे या नहीं?
Have you eaten (= sucked) mangoes or not?

775. उर्वारुकफलान्यत्र मधुराणि जायन्ते।
खरबूजे के फल यहां मीठे होते हैं।
Here the melons are sweet

776. इक्षुभ्यो गुडादिकं निष्पद्यते।
ऊख से गुड़ आदि बनाये जाते हैं।
Jaggery, etc. are made from sugar cane.

777. इदानीमाकण्ठं दुग्धं पीतं मया।
इस समय गले तक मैंने दूध पिया।
Now I have taken milk which is brimming upto my throat.

778. तक्रं देहि।
मठा दे।
Give me butter milk.

779. दुग्धं पिब।
दूध पी।
Take milk.

780. अत्र श्वेता शर्करा वर्तते।
यहां सफेद चीनी है।

Here there is sugar of white colour.

781. अयं रुच्या दध्नौदनं भुङ्क्ते।
यह प्रीति से दही के साथ भात खाता है।
He relishes rice with curd.

782. अद्य मोदका भुक्ता न वा?
आज लड्डू खाये या नहीं?
Have you eaten *laddoos* or not today?

783. त्वया कदाचित्कृशरा भुक्ता न वा?
तूने कभी खिचड़ी खाई है या नहीं?
Have you ever eaten *khichri* or not?

784. मयाऽपूपा भक्षिताः।
मैंने मालपूवे खाये हैं।
I have eaten *maalpuas*.

785. सशर्करं दुग्धं पेयम्।
शक्कर के सहित दूध पीना चाहिये।
We should take sugary milk (=milk with sugar added to it).

786. येन धर्मः सेव्यते स एव सुखी जायते।
जो धर्म का सेवन करना है वही सुखी होता है।
One who practises righteousness alone remains happy.

## ५१. लेख्यलेखकप्रकरणम्

## 51. Topics and Authors

787. मनुष्यो लेखाभ्यासं सम्यक् कुर्यात्।
मनुष्य लिखने का अभ्यास अच्छी प्रकार करे।
A person should carry out proper practice in writing.

788. अयमत्युत्तममक्षरविन्यासं करोति।
यह अत्युत्तम अक्षर लिखता है।
He writes letters of the alphabet very beautifully.

789. लेखनीं सम्पादय।
कलम बनाओ।
Mend a reed pen.

790. मसीपात्रमानय।
दवात ला।
Bring an inkpot.

791. पुस्तकं लिख।
पोथी लिख।
Write a book.

792. तत्र पत्रं लिखित्वा प्रेषितं न वा?
वहां चिट्ठी लिखकर भेजी या नहीं?
Have you written and posted the letter or not?

793. प्रेषितं पञ्च दिनानि व्यतीतानि तस्य प्रत्युत्तरमप्यागतम्।

भेजी, पांच दिन-बीते, उसका जवाब भी आ गया।

I have posted. Five days have since passed (=I posted it five days ago). Even its reply has been received (= come).

794. सुवर्णाक्षराणि लिखितुं जानासि न वा?

सुनहरी अक्षर लिखने जानता है या नहीं?

Do you know how to write golden letters or not?

795. जानामि तु परन्तु सामग्रीसञ्चयने लेखने च विलम्बो भवति।

जानता तो हूँ परन्तु चीज इकट्ठी करने और लिखने में देर होती है।

I know how to. But it takes me a lot of time to collect the material and (then) write.

796. यद्यंगुष्ठतर्जनीभ्यां लेखनीं गृहीत्वा मध्यमोपरि संस्थाप्य लिखेत्तर्हि प्रशस्तो लेखो जायेत।

जो अंगूठा तर्जनी अंगुली से कलम को पकड़कर बीचली अंगुली पर रखकर लिखे तो बहुत अच्छा लेख होवे।

If we hold the reed pen between the thumb and the fore finger, and put it on the middle finger, the result will be very beautiful handwriting.

797. अयमतीव शीघ्रं लिखति।

यह अत्यन्त जल्दी लिखता है।

He writes very fast.

798. एतस्य लेखनी मन्दा चलति।

इसकी लेखनी धीरे चलती है।

His pen moves very slowly.

799. यदि त्वमेकाहं सततं लिखेस्तर्हि कियतः श्लोकांल्लिखितुं शक्नुयाः?

यदि तू एक दिन निरन्तर लिखे तो कितने श्लोक लिख सके?

If you write continuously for a day how many *shlokas* (= verses) can you write?

800. पञ्चशतानि।

पांच सौ।

Five hundred.

801. यदि शिक्षां गृहीत्वा शनैः शनैर्लिखितुमभ्यस्येत्तर्ह्यक्षराणां सुन्दरं स्वरूपं स्पष्टता च जायेत।

यदि शिक्षा ग्रहण करके धीरे-धीरे लिखने का अभ्यास करे तो अक्षरों का दिव्य स्वरूप और स्पष्टता होवे।

If, having received training, you practise writing slowly the form of letters may become beautiful and clear.

802. अस्मिंल्लाक्षारसे कज्जलं सम्मेलितं न वा?

इस लाख के रस में कज्जल मिलाया है या नहीं?

Have you added black powder or not to the juice of lac.

803. मेलितं तु न्यूनं खलु वर्त्तते।
मिलाया तो है परन्तु थोड़ा है।
It has, of course, been mixed but only in a small quantity.

804. मनुष्यैर्यादृशः पठनाभ्यासः क्रियेत तादृश एव लेखनाभ्यासोऽपि कर्त्तव्यः।
मनुष्य लोग जैसा पढ़ने का अभ्यास करें वैसा ही लिखने का भी करना चाहिये।
Men should carry out as much of practice in writing as they do in reading.

805. मया वेदपुस्तकं लेखयितव्यमस्त्येकेन रूप्येण कियतः श्लोकान् दास्यसि?
मुझको वेद का पुस्तक लिखाना है, एक रुपये से कितने श्लोक देगा?
I am to write a book on the Vedas. How many *shlokas* (= verses) will you give for one rupee?

806. अत्युत्तमानि ग्रहीष्यसि चेत्तर्हि शतत्रयं मध्यमानि चेच्छतपञ्चकम्।
जो बहुत अच्छे लोगे तो तीन सौ और मध्यम लोगे तो पांच सौ।
Three hundred, if you (want to) take verses of the best quality and five hundred, if of the medium quality.

807. साधारणानि चेत्सहस्रं श्लोकान् दास्यामि।
यदि बहुत साधारण वा घटिया लोगे तो हजार श्लोक दूँगा।
If you (want to) take *shlokas* of an ordinary quality, then I shall give you one thousand verses.

808. शतत्रयमेव ग्रहीष्यामि परन्त्वत्युत्तमं लिखित्वा दास्यसि चेत्।
तीन सौ ही लूंगा परन्तु बहुत अच्छा लिखकर देगा तो।
I shall take only three hundred provided you give them to me after writing them excellently.

809. वरमेवं करिष्यामि।
अच्छा, ऐसा ही करूंगा।
All right! I shall do as desired.

## ५२. मन्तव्यामन्तव्यप्रकरणम्

## 52. Beliefs and Non-beliefs

810. त्वं जगत्स्रष्टारं सच्चिदानन्दस्वरूपं परमेश्वरं मन्यसे न वा?
तू इस संसार के बनाने वाले सच्चित्, और आनन्दस्वरूप परमेश्वर को मानता है या नहीं?
Do you have faith in God who is the creator of this world and who has been ever existent, who

is conscious and who is in full bliss?

811. अयं नास्तिकत्वात् स्वभावात् सृष्ट्युत्पत्तिं मत्वेश्वरं न स्वीकरोति।

यह मनुष्य नास्तिक होने से स्वभाव से सृष्टि की उत्पत्ति को मानकर ईश्वर को नहीं मानता।

He does not believe in the existence of God due to his being an atheist, and due to his belief that the cosmos gets created due to its own nature (of getting automatically created).

812. यद्ययं कर्तृकार्यरचकरचनाविशेषान् संसारे निश्चिनुयात्तर्ह्यवश्यं परमात्मानं मन्येत।

जो यह नास्तिक कर्त्ता क्रिया बनाने हारा और बनावट को इस जगत् में निश्चय करे तो अवश्य ईश्वर को माने।

He would surely accept God's existence if he were to apply to this world the principle of creator and creation.

813. योऽत्र सृष्टौ रचितरचनां पश्यति स जीवः कार्य्यवत्स्त्रष्टारं कुतो न मन्येत?

जो इस सृष्टि में बने हुए पदार्थों की बनावट को प्रत्यक्ष देखता है वह जैसे कारीगरी को देख के कारीगर का निश्चय करते हैं वैसे जगत के बनाने वाले परमात्मा को क्यों न माने?

Why should one not believe in (the existence

of) the Creator as one does in the case of the maker after seeing the created things?

814. यत्रोत्तमा धार्मिका आस्तिका विद्वांसोऽध्यापका उपदेष्टारश्च स्युस्तत्र कोऽपि कदाचिन्नास्तिको भवितुं नैवार्हेत।

जहां श्रेष्ठ धर्मात्मा आस्तिक विद्वान् लोग पढ़ाने वाले और उपदेशक हों, वहां कोई भी मनुष्य नास्तिक कभी नहीं हो सकता।

No one can ever be an atheist there where there are good, righteous, theistic, scholarly teachers and preceptors.

815. कैः कर्मभिर्मुक्तिर्भवति तदा क्व वसति तत्र किं भुज्यते च?

किन कर्मों से मुक्ति होती है, उस समय कहां वास करते और वहां क्या भोगते हैं?

Which actions lead one to salvation? Where does the soul live then (= during the period of salvation)? What pleasure or pain is experienced there (by the soul)?

816. धर्म्यैः कर्मोपासनाविज्ञानैर्मुक्तिर्जायते, तदानीं ब्रह्मणि निवसन्ति परमानन्दं च सेवन्ते।

धर्मयुक्त कर्म, उपासना और विज्ञान से मोक्ष होता है, उस समय ब्रह्म में युक्त जीव रहते और परम आनन्द का सेवन करते हैं।

Salvation is achieved by virtue of righteous

actions, devotion to God, and correct knowledge. Then the souls live in God enjoying complete bliss.

817. मोक्षं प्राप्य तत्र सदा वसन्त्वाहोस्वित् कदाचित्ततो निवृत्य पुनर्जन्ममरणे प्राप्नुवन्ति?

जीव मुक्ति को प्राप्त होके वहां सदा रहते हैं अथवा कभी वहां से निवृत्त होकर पुनः जन्म और मरण को प्राप्त होते हैं?

Do the souls after having attained salvation live there (absorbed in God) for ever or do they come back from there and again pass through (the cycle of) births and deaths?

818. प्राप्तमोक्षा जीवास्तत्र सर्वदा न वसन्ति, किन्तु महाकल्पपर्यन्तमर्थाद् ब्राह्ममायुर्यावत्तावत्तत्रोषित्वाऽऽनन्दं भुक्त्वा पुनर्जन्ममरणे प्राप्नुवन्त्येव।

मुक्तिको प्राप्त हुए जीव वहां सर्वदा नहीं रहते, किन्तु जितना ब्राह्म कल्प का परिमाण है उतने समय तक ब्रह्म में वास कर आनन्द भोग के फिर जन्म और मरण को अवश्य प्राप्त होते हैं।

Having attained salvation the souls do not live there for ever. Instead, they again do enter into the cycle of births and deaths after having lived for one *Brahma kalp*, and after having enjoyed full bliss.

---

इति श्रीमद्दयानन्दसरस्वतीस्वामिना निर्मितः
संस्कृतवाक्यप्रबोधनामको निबन्धः समाप्तः॥

**Here ends the book entitled *Sanskrit vakya prabodhah***
**Written by Swami Dayanand Saraswati.**

---

